* मिथिला-ग्रन्थमालायाः त्रयस्त्रिंशत्तमं ( ३३ ) प्रसूनम् *

अथ

# तिथिनिर्णयः

महामहोपाध्याय-श्रीराजनाथ( रजे )मिश्रप्रणीत

पण्डित श्रीरामचन्द्रझा, व्याकरणाचार्यः



चौखम्बा विद्याभवन, चौक, पो० बा० नं० १०६९, वाराणसी

Jain Education International For Private & Personal Use Only www.jainelibrary.org

॥ श्रीः ॥

* मिथिला-ग्रन्थमालायाः त्रयस्त्रिंशत्तमं (३३) प्रसूनम् *

महामहोपाध्याय-रजेमिश्रप्रणीतः

# तिथिनिर्णयः

सम्पादकः

श्री पण्डित रामचन्द्र झा व्याकरणाचार्यः

पण्डित श्रीदेवनारायणझा संशोधकः



चौखम्बा विद्याभवन, चौक, पो० बा० १०६९, वाराणसी

मूल्यं ५-००

[ ई० १९९३

Jain Education International For Private & Personal Use Only www.jainelibrary.org

# आशिषाऽभिनन्दनम्

चञ्चच्चन्द्रमरीचिचारुवदनी बिम्बोष्ठकान्तामणि-
भक्तिज्ञानप्रसादिताशुगिरिजा संराजमानावनीम् ।
तुच्छां स्वच्छमना निधाय हृदये पत्युः समक्षं मुदा
तीर्थद्वार-'प्रयाग'-देवसरितस्तीरे वपुर्या जहौ ॥
सेयं स्वर्गसुधागलन्मधुरतां मन्दं पिबन्तीत्यहो !
स्वीयोत्पत्तिसुकीर्तिपूतमिथिला सीतासमा धीमती ।
नाम्ना 'चेन्दुमती' प्रसन्नवदना दिव्यप्रभावा चिरं
लोकानामनुरञ्जनी विलसतु स्वर्गे सुधावर्षिणी ॥

व्यथित–रामचन्द्रः

Jain Education International For Private & Personal Use Only www.jainelibrary.org

# आत्म-निवेदन

श्रुतिर्विभिन्ना स्मृतयो विभिन्ना नैको मुनिर्यस्य वचः प्रमाणम् ।
धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः ॥ ( महाभारत )

तिथिनिर्णय मिथिला में अनेकों प्रकारक अछि । प्रायः सब में प्रतिपद् से पूर्णिमा तक तिथि-द्वैधक सामान्य विचार देखल आइछ । व्रतनिर्णय, तिथिनिर्णय, दुहू भिन्न-भिन्न विषय थीक । व्रतनिर्णयक विशेष वचन पुराण में उपलब्ध होइछ आ' तदनुसारे मिथिलामही-मनीषी व्रतनिर्णय करैत एलाह अछि ।

मिथिलाक पञ्चांग ( पत्रा ) व्रतनिर्णायक नहि मानल जाइछ—काशी आदि प्रान्त में पंचांगकारे एकर भार नेने छथि । बिना ननु-नच कें जनता ओकर समादर करैछ—यतः पर्वतिथि निर्विवाद छपैछ ।

मिथिला में प्राचीन रूढ़िवादी विद्वानक संख्या वेसी अछि । डाँट- डपटक संग-संग महाशापो देबाक अधिकारी ओ अपना कें बुझैत छथि—एहि तरहक पत्र हमरा बराबरि अबैत रहैत अछि ।

हम चाहैत छी जे 'काशी मैं० विद्वज्जन समिति" सँ मिथिला-पर्वनिर्णय' नामक पुस्तक प्रकाशित हो आ' पंचांगकार ओकरे अनुशरण करथि । सम्प्रति पंचांगकार अधीर भय गेल छथि । सन् १३७९ सालक 'विद्यापति-पञ्चाङ्ग देखू ! अगहनक पुच्छर में एको टा द्विरागमनक दिन नहि अछि । प्रवासी असंस्कृतज्ञ मैथिल एतदर्थं हमरा अनेकों पत्र लिखि कें पुछलैन्हि ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

विद्वद्गोष्ठीक गप-शपक प्रसंग में हम कहैत छियैन्ह जे 'तिथिनिर्णय, व्रतनिर्णय, दून्नू पृथक्-पृथक् थीक । कार्तिक शुक्ल प्रतिपद् में गोपूजा आ' गो-क्रीड़ाक समय एक नहि थीक । "नागविद्धा न कर्तव्या षष्ठी चैव कदाचन ।" एहि स्कन्दपुराणक वचन कें सर्वत्र नहि जोड़ू, नहि तँ—स्कन्दषष्ठी, हलषष्ठी, प्रतिहारषष्ठी, वनषष्ठी—सर्वत्र अव्याप्ति—अतिव्याप्ति दोष लागि जाएत । एक दिन हम स्वनामधन्य महामहोपाध्याय रजे मिश्रक तिथिनिर्णय में देखल—"व्रतनिर्णयः शुद्धिनिर्णयः तीर्थनिर्णयश्च यथावकाशं प्रकाशमेष्यन्ति" ( पृ० ३५ में ) ई देखि हम आश्वस्त भेलहुँ आ' प्रस्तुत पुस्तक कें सुसंस्कृत रूप में संपादन कय प्रकाशित कराओल अछि । विद्वान् एहिसँ विशेष उपकृत होएताह । इति शम् ।

सर्वे च सुखिनः सन्तु सर्वे सन्तु निरामयाः ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद् दुःखभाग् भवेत् ॥

तरौनी, सुदामा-कुटी
वि० सं० २०२८

निवेदकः
—रामचन्द्र झा
( सम्पादक : मिथिला ग्रन्थमाला, काशी )

Jain Education International For Private & Personal Use Only www.jainelibrary.org

# अथ तिथिनिर्णयः[1]

## महामहोपाध्याय-श्रीराजनाथ-( रजे )-मिश्रविरचितः ।

## अथ सामान्यतिथिपरिभाषा

नत्वा दुण्ढिं गिरं विष्णुं निबन्धॄन् गिरिशं गुरून् । क्रियते राजनाथेन तिथिनिर्णयसंग्रहः ॥

तत्र तिथिरखण्डकालविशेषरूपा । विशेषत्वांशे चन्द्रमण्डलकलारम्भाद्यनुगुणक्रियाप्रचयत्वरूपादेरुपलक्षणतयैवोपयोगः । अत एव "आश्विनाऽपरपक्षे तु श्राद्धं देयं दिने दिने" इत्यत्र दिनपदस्य तिथिपरत्वमते वीप्सालभ्यतिथिनिरूपितव्यापकत्वं श्राद्धे न व्याहन्यते । अन्यथा तादृशक्रियाप्रचयस्य तिथित्वे सर्वासु क्रियासु श्राद्धाऽसंभवेन श्राद्धमव्यापकमेव स्यात् । अखण्डरूपत्वे तु तत्तत्तिथौ योग्यकाले सकृच्छ्राद्धाचरणेऽपि तत्तत्तिथिनिरूपितव्यापकत्वस्य व्याघातो न श्राद्धे । न च चतुर्दश्यां श्राद्धाऽनाचरणेनैव तद्व्याघात इति वाच्यम् । तत्रापि केषाञ्चिन्मते श्राद्धविधानात् शस्त्रादिहतश्राद्धेन विशेषविहितेन सामान्यस्य बाधाद् वा "कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम्" इति मानवनिषेधवचनैकवाक्यतया तदितरतिथिपरत्वेन व्यापकत्वाक्षतेश्च । तदाह—

विष्णुपुराणे—"कालस्वरूपं रूपं तद्विष्णोर्मैत्रेय वर्तते ।"

विष्णुधर्मोत्तरे—"अनादिनिधनः कालो रुद्रः संकर्षणः स्मृतः । कलनात् सर्वभूतानां स कालः परिकीर्तितः ॥"

---

१. नास्त्ययं [ प्रतिहारषष्ठी ( छठ )–जीवत्पुत्रकाष्टमी ( जितिया ) आदि ] 'व्रतनिर्णयः' यतः पुस्तकान्ते स्वयमेवोक्तं ग्रन्थकर्त्रा मिश्रमहोदयेन—"व्रतनिर्णयः, शुद्धिनिर्णयः, तीर्थनिर्णयश्च यथावकाशं प्रकाशमेष्यन्ति" इति–सम्पादकः ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

कलनं = लयहेतुः ।

विष्णुपुराणे—ये समर्था जगत्यस्मिन् सृष्टिसंहारकारिणः । तेऽपि कालेन लीयन्ते कालो हि बलवत्तरः ॥

यत्तु हेमाद्रिधृतस्कन्दपुराणे—

अमाषोडशभागेन देवि प्रोक्ता महाकला । संस्थिता परमा माया देहिनां देहधारिणी ॥

अमादिपौर्णमास्यन्ता या एव शशिनः कलाः । तिथयस्ताः समाख्याताः षोडशैव वरानने ॥

गोभिलः—सूर्याचन्द्रमसोर्यः परस्सन्निकर्षः साऽमावास्येति, परः सन्निकर्षश्च उपर्यधोभावापन्नसमसूत्रपातन्यायेन राश्येकांशावच्छेदेन सहावस्थानरूपः । तथा च अमावास्याघटकताद्दशसहावस्थानयुक्तार्कमण्डलाच्चन्द्रमण्डलस्य राशिद्वादशांशभोगात्मकनिर्गमरूपवियोगेन शुक्लायाः प्रतिपदादितत्तत्तिथेरुत्पत्तिः । तथा च सूर्यसिद्धान्ते—

अर्काद्विनिःसृतः प्राची यद्यात्यहरहः शशी । भागैर्द्वादशभिस्तत् स्यात् तिथिश्चान्द्रमसं दिनम् ॥

विष्णुधर्मोत्तरेऽपि—त्रिंशांशकस्तथा राशेर्भाग इत्यभिधीयते । इति ।

एवं सूर्याचन्द्रमसोर्यः परो विप्रकर्षः सा पौर्णमासीति—गोभिलः । परमवियोगानन्तरमर्कमण्डलप्रवेशाय चन्द्रमण्डलस्य राशिद्वादशांशद्वादशांशभोगात्मकप्रवेशरूपसन्निकर्षेण कृष्णायास्तत्तत्तिथेश्चोत्पत्तिरिति तदपि तिथिपदशक्यतावच्छेदके उपलक्षणतयोपयुज्यमानचन्द्रमण्डलकलारम्भाद्यनुगुणक्रियाप्रचयत्वाभिप्रायेणेति बोध्यम् ।

षट्त्रिंशन्मतम्—तत्र पक्षावुभौ मासे शुक्लकृष्णौ क्रमेण हि । चन्द्रवृद्धिकरः शुक्लः कृष्णश्चन्द्रक्षयात्मकः ॥

पक्षत्याद्यास्तु तिथयः क्रमात् पञ्चदशस्मृताः । दर्शान्ताः कृष्णपक्षे ताः पूर्णिमान्ताश्च शुक्लके ॥

पक्षतिः = प्रतिपत् । सा तिथिर्द्विविधा शुद्धा विद्धा चेति । शुद्धामाह सूर्यसिद्धान्ते—

"आदित्योदयवेलामारभ्य षष्टिनाडिका । या तिथिः सा तु शुद्धा स्यात् सर्वास्वेष विधिः स्मृतः ॥"

Jain Education International For Private & Personal Use Only www.jainelibrary.org

"आदित्यादग्रवेलामारभ्य षष्टिनाडिका । या तिथिः सा तु शुद्धा स्यात् सर्वास्वेव विधिः स्मृतः ॥"



विद्धा तु त्रिविधा—'खर्वो दर्पस्तथा हिंसा त्रिविधं तिथिलक्षणम्' । विद्धा तिथिलक्षणमित्यर्थः । खर्वः साम्यम् । दर्पो वृद्धिः । हिंसा क्षयः ।

पैठीनसिः—पक्षद्वयेपि तिथयस्तिथिं पूर्वां तथोत्तराम् । त्रिभिर्मुहूर्तैर्विद्धयन्ति सामान्योऽयं विधिः स्मृतः ॥
चतुर्दशी पञ्चमी च तथा च दशमी तिथिः । पूर्वां तिथिं दूषयति त्रिभिरेव मुहूर्तकैः ॥
(यत्तु)—द्वादशनाडीभिर्दिक्पञ्चदशभिस्तथा । भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिम् ॥
सर्वप्रकारवेधोऽयमुपवासस्य दूषकः । अरुणोदयवेधस्तु वैष्णवेषु प्रकीर्तितः ॥ इति ।

एवं च तिथिह्रासवृद्धिहेतुकपूर्वोत्तरतिथिवेधवशादुभयदिने तत्तिथिलाभे सन्देहात् तत्तिथिकृत्यानिवृत्त्यापत्तिरावृत्यापत्तिर्वा मा भूदत्यसन्दिग्धानुष्ठानसिद्ध्यर्थनिर्णयजिज्ञासायामाह—

स्कन्दपुराणे—दिवारात्रिव्रतं यच्च एकस्यां च तिथौ स्मृतम् । तस्यामुभयगामिन्यां कुर्यादेवं व्रतं व्रती ॥
कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः । तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम् ॥

माहेश्वरे—व्याप्नोति कर्मकालं या तिथिर्भञ्च (नक्षत्रञ्च) दिनद्वयम् । युग्मवाक्येन निर्णीय ग्राह्या पूर्वा परापि वा ॥

युग्मवाक्यं यथा गृह्यपरिशिष्टे—

कात्यायनः—युग्माग्निकृतुभूतानां षण्मुन्योर्वसुरन्ध्रयोः । रुद्रेण द्वादशी युक्ता चतुर्दश्याथ पूर्णिमा ।
प्रतिपदा त्वमावास्या तिथ्योर्युग्मं महाफलम् । एतद्व्यस्तं महाघोरं हन्ति पुण्यं पुराकृतम् ॥

तिथ्योर्युग्ममिति सर्वत्राभिसंबध्यते । तेन द्वितीयातृतीययोर्युग्मं मान्यम् । एवं सर्वत्र । तथा च द्वितीया तृतीयामिश्रा ग्राह्या । तृतीयाऽपि द्वितीयामिश्रा ग्राह्या । एवमग्रेपि तिथ्यन्तरसाहित्येन तत्तत्तिथिग्रहणं न तु तिथ्यन्तरकार्ये तिथ्यन्तरविधिः व्रतनिमित्ततिथिबाधे गौरवात् । न वा युग्माख्यस्यैकस्यैव मिलितस्य विधिः, तादृशकाला-

Jain Education International For Private & Personal Use Only www.jainelibrary.org

न्तरस्यासम्भवात् । न च मिलितं तिथिद्वयं कर्माङ्गम् एकतिथ्यवच्छेदेन कर्मसमाप्तौ वैगुण्यापत्तेः । एतद्व्यस्तमिति पूर्वोक्तयुग्मविपरीतं न ग्राह्यम् । तेन प्रतिपद्द्वितीययोर्युग्मं न ग्राह्यमेवमग्रेऽपि । चतुर्दशी शुक्लापूर्णिमायोगात् । कृष्णा तु त्रयोदशीयुतैव ग्राह्या युग्मवचनाऽनाघ्रातत्वात् 'कामविद्धो हरः पूज्यः' इति स्मृत्यन्तराच्च । प्रतिपदपि शुक्लैव अमायोगसामर्थ्यात् । द्वितीयादिद्वादशीपर्यन्ताः शुक्लाः कृष्णाश्च विशेषानुपादानात् । अयं च युग्मविधिः अहोरात्र-साध्योपवासादिकर्मणि तिथिद्वैधे सति । देवपूजादावपि दिनद्वये विहितपूर्वाह्णादिगामितिथिलाभे सति च सर्वत्र बोध्यः । यदा त्वेकस्मिन्नेव दिने विहितकाले तिथिलाभस्तदा तत्रैव व्रतादि कार्यम् सन्देहानुत्थानात् । न च व्यस्तानिन्दाश्रवणात् तत्रापि युग्मादरः दिनद्वयगामिनि विहितकाले सति सप्तम्यादिनिमित्तकं सकृत् कर्तव्यं कर्म पूर्वस्मिन् परस्मिन् वेत्यपेक्षायामेव युग्मविधेरवतारात् । अपेक्षितविधिबलात् नियममात्रे लाघवाच्च व्यस्तनिन्दापि तत्रैव विधिशेषत्वात् ।

नन्वेवमहोरात्रव्यापिन्यां षष्ठ्यां सत्यामुत्तरदिने वर्द्धमानायाः षष्ठ्याः सप्तमीविद्धाया आदरोस्तु इति चेन्न । दिनद्वये तिथिद्वैधे सत्येव तद्वचनप्रवृत्तेरिति जीर्णोद्धारः । केचित्तु उपवासमात्रे युग्मविधिमिच्छन्ति । निषेधे तु न कुत्रापि युग्मविधिः अष्टम्यादौ मांसादिभक्षणनिषेधस्य समस्तकालव्यापित्वेनापेक्षाविरहात् , एवं च निषेधे कालवर्जन-मिति वचनं न्यायमूलकमेव । तदेवं युग्माग्नीत्यादि गौडीयवचनानुसारिणी दशमी त्रयोदशी कृष्णप्रतिपद्भिन्नासु तिथिषु व्यवस्था सिद्धा ।

भूपालादिमते तु सप्तम्येकादश्योर्वाचनिकी व्यवस्था । तिथ्यन्तरेषु व्रते संकल्पस्य प्राधान्यात् तस्योदयकाले दुर्घटत्वेऽपि तत्कालव्यापिन्यां तिथौ प्रातरेव विधानादुदयकालसंबन्धितिथ्यादरो युक्तः । दिनद्वयेपि उदयगामि-तिथिलाभे कपालाधिकरणन्यायाद्व्यवस्था युक्तं चैतदीदृश्याख्रिस्पृशाया एव सम्भवात् । तत्र च सर्वं तिथिमलं त्याज्य-

Jain Education International For Private & Personal Use Only www.jainelibrary.org

तिथित्वेन कपालाधिकरणन्यायाद्व्यवस्था युक्तं चैतदीदृश्यास्त्रिस्पृशाया एव सम्भवात् । तत्र च सर्वं तिथिमलं त्याज्य-



मन्यत्र हरिवासरादिति स्मृत्यन्तरसंवादात् । अत एव उपवासव्रते तिथ्यन्तिमभागयुताहोरात्रस्यैव ग्राह्यतया सप्तमीमुपवसेदिति विधिबोधितोपवासस्य न लोपापत्तिर्न वा आवृत्त्यापत्तिः सप्तमीपदस्य सप्तमीचरमभागयुता-होरात्रपरत्वात् । न चाहोरात्रव्यापकोपवासव्रते अधिकव्याप्त्यैव तिथिरादर्तव्या न तु मुहूर्तादिव्याप्त्येति वाच्यम्, आरम्भमात्रे विहितकालापेक्षणात् न तूत्तरत्रापि । अत एवाभ्युदितेऽष्टौ विहितकाले प्रारब्धं कर्म कालान्तरेपि समाप्यत इत्युक्तम् । तिथेः प्रान्त्यमुपोष्यं स्यादिति नारदीयाच्च । पठन्ति च—'सा तिथिः सकला ज्ञेया यस्या-मुदयते रविः ।' यथा सम्पूर्णा तिथिरुपवासादिकर्माङ्गं तथा असंपूर्णाप्युदयगामिनीति तदर्थः । एतदेवाहुः—

गौडाः—व्रतोपवासनियमे घटिकैकाऽपि या भवेत् । सा तिथिः सकला ज्ञेया पित्रर्थे चापराह्णिकी ॥

राजमार्त्तण्डेऽपि—व्रतोपवासस्नानादौ घटिकैका यदा भवेत् । उदये सा तिथिर्ग्राह्या श्राद्धादावस्तगामिनी ॥

बौधायनोपि—उदये तूपवासस्य नक्तस्यास्तमने तिथिः । मध्याह्नव्यापिनी ग्राह्या एकभुक्तव्रते तिथिः ॥

गृह्यपरिशिष्टे—सा तिथिस्तदहोरात्रं यस्यामभ्युदितो रविः । तथा कर्माणि कुर्वीत ह्रासवृद्धी न कारणम् ॥

एतद्व्यवस्थाद्वयमप्याकूतं हरिनाथ-श्रीदत्त-वाचस्पत्यादिनिबन्धेषु ।

इति सामान्यपरिभाषा ।

## अथ कालविभागः

अरुणोदयकालमाह ब्रह्मवैवर्त्ते—चतस्रो घटिकाः प्रातररुणोदय उच्यते । यतीनां स्नानकालोयं गङ्गाम्भःसदृशः स्मृतः ॥

अत्र घटिका दण्डरूपा ग्राह्या यथा—

त्रियामां रजनीं प्राहुस्त्यक्त्वाद्यन्तचतुष्टयम् । नाडीनां तदुभे सन्ध्ये दिवसाद्यन्तसंज्ञके ॥

मत्स्यपुराणे—प्रातः कालो मुहूर्तांस्त्रीन् सङ्गवस्तावदेव हि । मध्याह्नस्त्रिमुहूर्तः स्यादपराह्णस्ततः परः ॥

Jain Education International For Private & Personal Use Only www.jainelibrary.org

सायाह्नस्त्रिमुहूर्तः स्याच्छ्राद्धं(१) तत्र न कारयेत्। राक्षसी नाम सा वेला गर्हिता सर्वकर्मसु ॥
अह्नो मुहूर्ता विख्याता दशपञ्च च सर्वदा। अत्राष्टमो मुहूर्तो यः स कालः कुतुपः स्मृतः ॥
रौहिणो नवमः प्रोक्तः पितृणामुभयं हितम्।

अन्यत्रापि—द्वौ यामौ घटिकान्यूनौ द्वौ यामौ घटिकाधिकौ। स कालः कुतुपो ज्ञेयः पितृणां दत्तमक्षयम् ॥

श्रुतिः—पूर्वाह्णो वै देवानां मध्यन्दिनं मनुष्याणामपराह्णः पितृणामिति। दिनमानस्य त्रिधा विभागेन सङ्गमनीया। नक्तमाह—

भविष्ये—मुहूर्तोनं दिनं केचित् प्रवदन्ति मनीषिणः। नक्षत्रदर्शनान्नक्तमहं मन्ये गणाधिप ॥

नक्षत्रदर्शनादिति पूर्वावधिकथनम्। तेन नक्तपदाद्रात्रिमात्रप्राप्तौ सन्ध्याव्यावृत्तौ तात्पर्यम्। आदित्यास्तमनकालस्य तथात्वात्। एवञ्च "नक्तव्रते तु सम्प्राप्ते तत्कालव्यापिनी तिथिः" इति दक्षवाक्ये। "उदये तूपवासस्य नक्तस्यास्तमने तिथिः" इति बौधायनवाक्येऽपि नक्तपदं रात्रिपरम्। "नक्तादिव्रतयोगे तु रात्रियोगो विशिष्यते" इत्यनेन सहैकवाक्यतानुरोधात्। तथापि "प्रदोषव्यापिनी ग्राह्या तिथिर्नक्तव्रते सदा।" प्रदोषो यथा तिथितत्त्वविश्वादर्शयोः—"प्रदोषोऽस्तमनादूर्ध्वं घटिकाद्वयमिष्यते।" घटिकाशब्दोऽत्र मुहूर्तपरः। त्रयोदश्यस्तगे सूर्ये चतसृष्वपि नाडिषु। भूतविद्धा तु या तत्र शिवरात्रिव्रतञ्चरेत् ॥ इति वायुपुराणेन सहैकवाक्यतानुरोधात्। चतुर्वर्गचिन्तामणौ तु—"नक्षत्रदर्शने नक्तं प्राग्यामाभ्यन्तरेऽशनम्" इत्युक्तम्। मिथिलेशशुभङ्करवर्द्धमानचरणास्तु—

(१) बृहन्नारदीये—दिवोदितानि कर्माणि प्रमादादकृतानि वै। यामिन्या प्रहरं यावत् तावत् कर्माणि कारयेत् ॥
संग्रहेऽपि—रात्रौ प्रहरपर्यन्तं दिवाकृत्यानि कारयेत्। ब्रह्मयज्ञं च सौरं च वर्जयित्वा विशेषतः ॥

Jain Education International For Private & Personal Use Only www.jainelibrary.org

उदयात् प्राक्तनी सन्ध्या घटिकाद्वयमिष्यते । सायं सन्ध्या त्रिघटिका अस्तादुपरि भास्वतः ॥

तथा—त्रिमुहूर्तः प्रदोषः स्याद् भानावस्तंगते सति । तत्परा रजनी प्रोक्ता तत्र कर्म परित्यजेत् ॥

प्रदोषो रजनीमुखम् इत्यभिधानवचनमप्येतत्परमेव, अन्यथा नानार्थता स्यादित्याहुः । अत एव षड्घटिकात्मके प्रदोषे पूर्वघटिकात्रयं परित्यज्योत्तरघटिकात्रये नक्तमेकभुक्तवत् कार्यमिति सिद्धवल्लिखन्ति पद्मधरमिश्राः ।

नरसिंहपुराणे—आत्मनो द्विगुणच्छायां यदा सन्तिष्ठते रविः । सौरं नक्तं विजानीयान्न नक्तं निशि भोजनम् ॥

तेन तदूर्ध्वन्दिवैव भोजनं निशि भोजनस्य निषेधात् । मुहूर्तोनन्दिनमिति भविष्यपुराणमप्येतत्परमेव । अतः प्रातस्तनद्विगुणच्छायोत्तरभोजनशङ्का निरस्ता । सौरव्रतेतरव्रते नाक्षत्रमेव नक्तमिति व्यवस्था सामान्यविशेषन्यायादिति समयप्रदीपः । यदा दिनद्वये प्रदोषव्यापिनी तिथिर्न लभ्यते तदा नरसिंहपुराणीयं ग्राह्यम् । "प्रदोषव्यापिनी न स्याद् दिवा नक्तं विधीयते ।" इति । स्कन्दपुराणादिति चतुर्वर्गचिन्तामणिः ।

वर्द्धमानपादास्तु—नक्षत्रदर्शनान्नक्तं गृहस्थानां स्मृतं बुधैः । यतेर्दिनाष्टमे भागे तस्य रात्रौ निषिद्ध्यते ॥

इति देवलवचनाद्यतेरेव रात्रिभोजननिषेधाद् "दिवा नक्तं विधीयते" इत्याहुः ।

नव्यमते तु—उपोषितव्यं नक्षत्रं यस्मिन्नस्तमियाद् रविः । युज्यते यत्र वा तारा निशीथे शशिना सह ॥

निशाविभागमाह, आगमे—निशा तु परमेशानि सूर्ये चास्तमुपागते ।

प्रहरे च गते रात्रौ घटिके द्वे परे च ये । महानिशा समाख्याता ततश्चातिमहानिशा ॥

द्वितीयप्रहरान्तिमघटिकाद्वयं तृतीयप्रहरादिघटिकाद्वयञ्चेत्यर्थः । अत एव—महानिशा द्वे घटिके रात्रेर्मध्यमयामयोः, इत्याह देवलः । इति कालविभागः ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

## अथ तिथिद्वैधविचारः

### ( १ ) प्रतिपद्-द्वैधः

पैठीनसिः—पञ्चमी सप्तमी चैव दशमी च त्रयोदशी । प्रतिपन्नवमी चैव कर्तव्या सम्मुखी तिथिः ॥
सम्मुखी सायाह्नव्यापिनी । आश्विनशुक्ला द्वितीयायुता ग्राह्या तथाहि—
देवीपुराणम्—यो मां पूजयते भक्त्या द्वितीयायां गुणान्युताम् । प्रतिपच्छारदीं ज्ञात्वा सोऽश्नुते सुखमक्षयम् ॥
यदि कुर्यादमायुक्तप्रतिपत्स्थापनं मम । तस्मै शापायुतं दत्त्वा भस्मशेषं करोम्यहम् ॥
मार्कण्डेयपुराणम्—पूर्वविद्धा तु या शुक्ला भवेत् प्रतिपदाश्विनी । नवरात्रव्रतं तस्यां न कार्यं शुभमिच्छता ॥

यदा तु पूर्वदिने षष्टिदण्डात्मिकापि वर्द्धमानोत्तरदिने लभ्यते, तदा द्वितीयायोगमनादृत्य पूर्वैव ग्राह्या, कपालाधिकरणन्यायात् । द्वितीयावेधस्तावकानामप्यमायोगनिषेधे तात्पर्यपर्यवसानात् । उत्तरत्र तिथिमलत्वेन निषेधाच्च । यत्र क्षयवशादमायुक्तैव लभ्यते न द्वितीयायुता तत्र अमाविद्धायामपि प्रतिपदि पूर्वाह्णे कलशस्थापनादि कार्यम् । द्वितीयायोगसम्भव एव पूर्वोक्तविधिनिषेधानां प्रवृत्तेः । एवमग्रेऽपि व्यवस्थाऽनुसन्धेयेति । कार्त्तिकशुक्ला ( प्रतिपत्तिथिः ) गोक्रीडायाममायुक्तापि ग्राह्या, यदाह,

नारदः—या कुहूः प्रतिपन्मिश्रा तत्र गाः पूजयेन्नृप । पूजनात् त्रीणि वर्द्धन्ते प्रजा गावो महीपतिः ॥
देवलः—प्रतिपद्दर्शसंयोगे गवां वै क्रीडनम्भवेत् । परविद्धासु करणात् पुत्रदारधनक्षयः ॥
तथा—प्रतिपद्यग्निकरणं द्वितीयायां गवार्चनम् । छत्रच्छेदं वित्तनाशं करिष्यति कुलक्षयम् ॥
गोभिलः—महाष्टमी च गोक्रीडा पौर्णमास्यावुभे तथा । श्रावणी फाल्गुनी चैव कुर्यादग्रयां नचोत्तराम् ॥

Jain Education International For Private & Personal Use Only www.jainelibrary.org

अमायां प्रथमाम्। तथा—नन्दायां दर्शनं रक्षा बलिदानं दशासु च। भद्रायां गोकुलक्रीडा देशनाशाय जायते॥

एवमादिवचनानि परदिने चन्द्रदर्शनसम्भावनायां पूर्वविद्धास्तावकानि। यदाह—राज्योपार्जकठक्कुरानुगृहीत-पुराणसमुच्चये—प्रतिपत्तु त्रियामा स्यान्मैत्रर्क्षे बुधवासरे। तद्दिने पूर्वयामे तु गोपूजा परमा शुभा॥ मैत्रमनुराधा। बुधवारस्य सौम्यदिनमात्रोपलक्षकता। तथा—

गवां क्रीडादिने यत्र रात्रौ दृश्येत चन्द्रमाः। सोमो राजा पशून् हन्ति सुरभी पूजकांस्तथा॥

चन्द्रदर्शनसंभावनामाह, शातातपः—

द्वितीया त्रिमुहूर्ता वै प्रतिपद् या पराह्णिकी। अन्वाधानं चतुर्दश्यां परतः सोमदर्शनात्।

मुहूर्तो घटिकाद्वयमित्यभिधानात्। घटिकाषट्कस्य किञ्चिन्न्यूनत्वेपि। यामोपलक्षकता पुराणसमुच्चयेन सहैकवाक्यतानुरोधात्। मिथिलेशशुभङ्करचरणा अपि द्वितीयायास्त्रिमुहूर्तव्यापित्वे चन्द्रदर्शनसम्भावनामाहुः, यामार्द्धान्यूनव्याप्ताविति यत्र क्वचिल्लभ्यते। तदुत्कटकोटिकाशङ्कानिरासार्थमेव। तथा—

पापाहे च विशाखायां न कुर्यात् पूजनं गवाम्।

राजमार्तण्डे—विशाखायाममावस्या विशाखाप्रतिपद्युता। आयुः पुत्रं धनं हन्ति यः कुर्यात् सुखरात्रिकाम्॥ गोनीराजने शुक्रास्तादिदोषपरिहारं कुर्वन्ति बहवः।

## ( २ ) द्वितीया-द्वैधः

द्वितीया तृतीयायुता ग्राह्या, युग्मनिगमात् तथाहि—

पैठीनसिः—एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी। त्रयोदश्यप्यमावास्या उपोष्याः स्युः परान्विताः॥

Jain Education International For Private & Personal Use Only www.jainelibrary.org

"अशून्यशयन" व्रते प्रतिपद्विद्धा ग्राह्या । तु तथाहि—

स्मृतिः—कृष्णाष्टमी बृहत्तल्पा सावित्री वटपैतृकी । कामत्रयोदशी रम्भा नोपोष्याः परसंयुताः ॥

सति सम्भवे पूर्वाह्णनक्तोभयव्यापिनी ग्राह्या । गोविन्दार्चनगोदानादीनां नियतपूर्वाह्णकृत्यानां क्षारलवणवर्जित-नक्तभोजनस्य च मत्स्यपुराणेऽभिधानात् । कार्तिकशुक्लद्वितीयाप्रसंगे आह—

स्कन्दपुराणे—कार्तिके शुक्लपक्षे तु द्वितीयायां युधिष्ठिर । यमो यमुनया पूर्वं भोजितः स्वगृहेऽर्चितः ॥
अतो यमद्वितीया सा त्रिषु लोकेषु विश्रुता । तस्यां निजगृहे विप्र भोक्तव्यन्न ततो नरैः ॥
स्नेहेन भगिनीहस्ताद् भोक्तव्यं पुष्टिवर्द्धनम् । वस्त्रालङ्करणादीनि ताभ्यो देयानि यत्नतः ॥

ब्रह्माण्डे—या तु भोजयते नारी भ्रातरं युग्मके तिथौ । अर्चयेच्चापि ताम्बूलैर्न सा वैधव्यमाप्नुयात् ॥
भ्रातुरायुःक्षयो राजन्न भवेत् तत्र कर्हिचित् ।

युग्मके = द्वितीयायाम् । सा च प्रतिपद्युता ग्राह्येति निर्णयामृतः । भोजनकालिकत्वेन मध्याह्नव्यापिनी ग्राह्येति हेमाद्रिः । सारसंग्रहे उमापतिस्तु अर्द्धप्रहरोपरि भोजनकालस्तत्कालव्यापिनी ग्राह्या, उभयदिने तत्प्राप्तौ परैव युग्म-निगमादित्याह अनुकूलञ्चात्र भूपालमतम् । एकादश्यष्टमीत्यादि पैठीनसिवचनञ्च । व्यवहारश्च यथा स्वकुलाचार-मुभयथापि शिष्टानाम् ।

## ( ३ ) तृतीया-द्वैधः

वैशाखशुक्ला तृतीया तु युगादित्वादुदयगामिनी ग्राह्या तथाहि—

देवीपुराणम्—युगाद्या वर्षवृद्धिश्च सप्तमी पार्वतीप्रिया । सूर्योदयमपेक्षन्ते न तत्र तिथियुग्मता ॥

Jain Education International For Private & Personal Use Only www.jainelibrary.org

वैशाखे शुक्लपक्षे तु तृतीयारोहिणीयुता। दुर्लभा बुधवारेण सोमेन च विशेषतः॥

नारदः—रोहिणीं बुधयुक्ताञ्च पूर्वविद्धां विवर्जयेत्। भक्त्या कृतापि मान्धातर्हन्ति पुण्यं पुराकृतम्॥

गौरीविनायकोपेता रोहिणी बुधसंयुता। विनापि रोहिणीयोगात् पुण्यकोटिफलप्रदा॥

भविष्ये—भद्रे कुरु प्रयत्नेन रम्भाख्यं व्रतमुत्तमम्। ज्येष्ठशुक्लतृतीयायां स्नात्वा नियमतत्परा॥

इति रम्भाव्रते द्वितीयायुतैव तृतीया ग्राह्या (तथाहि)—

स्मृतिः—रम्भाख्यां वर्जयित्वा तु तृतीयां मुनिसत्तम। अन्येषु सर्वकार्येषु गणयुक्ता प्रशस्यते॥

यत्तु—तृतीया तु न कर्तव्या द्वितीयासहिता विभो। द्वितीयासहितां तां तु या करोति विमोहिता॥

सा याति नरकं घोरं कालसूत्रं भयङ्करम्। द्वितीयाशेषसंयुक्तां या करोति नराधमा।

सा वैधव्यमवाप्नोति प्रवदन्ति मनीषिणः॥

इति ब्रह्मवैवर्तवचनम्। तत्तु रम्भेतरतृतीयापरम्। तथा हि—

मुहूर्तमात्रसत्वेपि दिने गौरीव्रतं परे। शुद्धाधिकायामप्येवं गणयोगप्रशंसनात्॥

चतुर्थीसहिता या तु सा तृतीया फलप्रदा। अवैधव्यकरी स्त्रीणां पुत्रपौत्रादिवर्द्धिनी॥

आद्या मधुश्रावणिका कज्जली हरितालिका। चतुर्थीमिश्रिता स्त्रीभिर्दिवा नक्तं विधीयते॥

दिवोदासीये—तृतीयानभसः शुक्ला मधुश्रावणिका स्मृता। भाद्रस्य कज्जली कृष्णा शुक्ला च हरितालिका॥

एवञ्च—एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी। अमावास्या तृतीया च ता उपोष्याः परान्विताः॥

इति विष्णुधर्मोत्तरीयं वचनं रम्भातृतीयातिरिक्ततृतीयासु योज्यम्।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

## ( ४ ) चतुर्थी-द्वैधः

बृहस्पतिः—चतुर्थीगणनाथस्य मातृविद्धा प्रशस्यते। मध्याह्नव्यापिनी चेत् स्यात् परतश्च परेऽहनि ॥
मातृविद्धा = तृतीयाविद्धा । तथा—

चतुर्थी च तृतीयायां महापुण्यफलप्रदा। कर्त्तव्या व्रतिभिर्वत्स गणनाथसुतोषिणी ॥

गणनाथं सुतोषयति तच्छीलेत्यर्थः। तथा—

कृष्णाष्टमी चतुर्थी च सावित्री वटपैतृकी। शुक्लत्रयोदशी रम्भा नोपोष्याः परसंयुताः ॥

पुराणसमुच्चयेऽपि—गौरी चतुर्थी वटवेनुपूजा दुर्गार्चनं दुर्भरहोलिका च।
वत्सस्य पूजा शिवरात्रिरेताः परान्विता घ्नन्ति नृपं च राष्ट्रम् ॥

तथा—मातृविद्धा प्रशस्ता स्याच्चतुर्थी गणनायके। मध्याह्नात् परतश्चेत् स्यान्नागविद्धा प्रशस्यते ॥

तथा—भाद्रशुक्लचतुर्थी या भौमेनार्केण वा युता। महती सात्र विघ्नेशमर्चित्वेष्टं लभेन्नरः ॥

स्कन्दपुराणे—माघशुक्लचतुर्थ्यान्तु नक्तव्रतपरायणः। ये त्वां ढुण्ढेर्चयिष्यन्ति तेऽर्च्याः स्युरसुरद्रुहाम् ॥

ब्रह्मवैवर्त्ते—गणेश-गौरी-बहुलाव्यतिरिक्ताः प्रकीर्तिताः। चतुर्थ्यः पञ्चमीविद्धा देवतान्तरयोगतः ॥

तदियं व्यवस्था एतावत्कार्येषु तृतीयायुता चतुर्थी मध्याह्नव्यापिनी ग्राह्या, माघशुक्लचतुर्थ्यां नक्तसम्बन्धादरोऽधिकः। कृष्णचतुर्थ्यां सङ्कष्टचतुर्थीव्रते चन्द्रोदयकालसम्बन्धादर इति। भाद्रशुक्लचतुर्थ्यां चन्द्रादर्शने—

मार्कण्डेयपुराणम्—सिंहादित्ये शुक्लपक्षे चतुर्थ्यां चन्द्रदर्शनम्। मिथ्याभिशापं कुरुते तस्मात् पश्येन्न तं तदा ॥
सिंहादित्ये इत्युपलक्षणम्।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

ब्रह्मपुराणे—नारायणोभिशप्तस्तु सुधाकरमरीचिषु। स्थितश्चतुर्थ्यामद्यापि मनुष्याणां पतिश्च सः॥
अभिशप्तः परीवादविषयो जातः।

अतश्चतुर्थ्यां चन्द्रं तु प्रमादाद्वीक्ष्य संयतः। पठेद्,वात्रेयिकावाक्यं प्राङ्मुखो वाप्युदङ्मुखः॥

तथा—"चतुर्थ्यामुदितश्चन्द्रो नेक्षितव्यः कदाचने"ति। अत्र शब्दक्रमाच्चतुर्थ्युदितस्य पञ्चम्यामपि दर्शने दोषो लभ्यते। "चतुर्थ्यां नेक्षितव्यः" इति मुनिभिरुदितः = कथितः, इति व्याख्याने चतुर्थ्यामेव दर्शनं दोषायेति लभ्यते। अत्र पूर्वोक्तवचनसामञ्जस्यमधिकम्। उभयदिने तत्कालव्याप्तौ परैव त्रिसन्ध्यव्यापित्वात्, युग्मनियमाच्च। तथाहि विष्णुधर्मोत्तरेऽपि—एकादशी तथा षष्ठी अमावास्या चतुर्थिका। उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुताः॥

यदि पूर्वदिने चन्द्रोदयकालमतिक्रम्य प्रवृत्ता चतुर्थी नोत्तरदिने चन्द्रोदयकालं व्याप्नुयात्तत्र पूर्वैव। चतुर्थ्यधिकरणकचन्द्रदर्शनस्य दोषाधायकत्वेनाविशेषात्। यदि चतुर्थीचन्द्रयोरुभयदिने सामानाधिकरण्याभावस्तदा भूपालमतमेवानुसरणीयमित्यलम्।

## (५) अथ पञ्चमी-द्वैधः

पञ्चमी पूर्वयुता ग्राह्या, तथाहि ब्रह्मपुराणम्—पञ्चमी च प्रकर्तव्या चतुर्थीसहिता प्रभो।
हारीतादयोऽपि—चतुर्थीसंयुता कार्या पञ्चमी परया न तु।
अन्यच्च—एकादशी तथा षष्ठी अमावास्या चतुर्थिका। उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुताः॥
नागपञ्चमी तु परैव, यदाह ब्रह्मवैवर्ते—

पूर्वाह्णे कृष्णपक्षे तु नागतोषकरी तिथिः। पञ्चमी तु प्रकर्तव्या षष्ठ्या युक्ता तु नारद॥

Jain Education International For Private & Personal Use Only www.jainelibrary.org

एतद्वचनस्य पूर्वार्धमदृष्ट्वा अपरार्धं स्कन्दोपवासपरत्वेन व्याचख्यौ। अयुक्तेति पदच्छेदं कृत्वा पूर्वोक्तवाक्यै-रेकवाक्यताञ्चाह। तत् सर्वं पूर्वार्धानवलोकनप्रयुक्तमेवेति बोध्यम्।

समयप्रदीपे—सुप्ते जनार्दने कृष्णपञ्चम्यां भवनाङ्गणे। पूजयेन्मनसादेवीं स्नुहीविटपसंस्थिताम् ॥

स्नुही = 'धान्नि'नाम्ना लोके प्रसिद्धा।

तथा—पञ्चमी नागपूजायां कार्या षष्ठीसमन्विता। तस्यां तु तुषिता नागा इतराः सचतुर्थिकाः ॥

इति स्मृतिरुभयपक्षसाधारणनागपञ्चमीं परयुतामनुगृह्णाति।

स्मृतिसारे—श्रावणे पञ्चमी शुक्ला सा प्रोक्ता नागपञ्चमी। तां परित्यज्य पञ्चम्यश्चतुर्थीसहिता मताः ॥ भाद्रशुक्ला ऋषिपञ्चमी सापि परैव। "शुक्ला परयुता ग्राह्या भाद्रे तु ऋषिपञ्चमी"ति स्मृतेः।

## ( ६ ) अथ षष्ठी-द्वैधः

षष्ठी तु स्कन्दव्रते पूर्वयुता ग्राह्या, तथाहि—

कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिचतुर्दशी। एताः पूर्वयुता ग्राह्यास्तिथ्यन्ते पारणं चरेत् ॥

तदतिरिक्ताः परा ग्राह्याः। षण्मुन्योरिति युग्मवाक्यात्। एकादश्यष्टमीषष्ठीत्यादिपूर्वोक्तस्मृतेश्च ॥ पक्षधरीये

स्मृतिसमुच्चये—षष्ठ्यष्टमी अमावस्था कृष्णपक्षे चतुर्दशी। एताः परयुता ग्राह्याः पराः पूर्वेण संयुताः ॥

नागविद्धा तु या षष्ठी रुद्रविद्धो दिवाकरः। कामविद्धो भवेद् विष्णुर्न ग्राह्यास्ते तु वासराः ॥

तथा—कलाकाष्ठानिमेषोपि यदि स्यादपरेऽहनि। षष्ठ्याः कथञ्चिद्विप्रेन्द्र सैवोपोष्या महातिथिः ॥

Jain Education International For Private & Personal Use Only www.jainelibrary.org

भाद्रशुक्लषष्ठीविषये स्कन्दपुराणम्—

षष्ठी च सप्तमी चैव वारश्चेदंशुमालिनः । योगोयं युग्मको नाम सूर्यकोटिग्रहैः समः ॥

एतावतैव कार्त्तिकशुक्ला रविषष्ठी (प्रतिहारषष्ठी) व्याख्याता । तथाहि —

षष्ठ्यामुपोष्य विधिवत् सप्तम्यामर्कपूजयेत् । सद्रव्यभागरुक् चैव सम्प्राप्नोतीप्सितं फलम् ॥

अर्केत्यत्रार्षो विभक्तिलोपः । उपोष्येति क्त्वाश्रुतेरर्कपूजयेदिति विधेश्च अर्घादिना पूजनस्यैव प्राधान्यावगमात्, तस्य चोत्तरत्र सप्तम्यां प्रातरेव विधानात् । पूर्वदिने सायमर्घादिना पूजने षष्ठी सप्तमी वा ग्राह्येति न नियमः । प्रधानीभूतोत्तरत्रार्घदानस्य तदङ्गोपवासस्य वाऽङ्गतयैव तदाचरणात् । आश्विनशुक्ला षष्ठी बिल्वाभिमन्त्रणे सायन्तनी ग्राह्या । षष्ठ्यां बिल्वतरौ बोधं सायं सन्ध्यासु कारयेत् । इति भविष्यात् । अहमप्याश्विने षष्ठ्यां सायाह्ने बोधयाम्यतः । इति बोधनमन्त्रार्थानुरोधाच्च । सन्ध्यामाह—

वराहमिहिरः—अर्धोदस्तमनात् सन्ध्या व्यक्तीभूता न तारका यावत् । इति ।

तिथितत्त्वेपि—बोधयेद्बिल्वशाखायां षष्ठ्यां देवीं फलेषु च । सप्तम्यां बिल्वशाखान्तामाहृत्य प्रतिपूजयेत् ॥

ब्रह्माण्डे—पत्रीप्रवेशात् पूर्वेद्युः सायाह्ने बिन्ध्यवासिनीम् । चण्डीमामन्त्रयेद् विद्वान्नात्र षष्ठी पुरस्क्रिया ॥

बिल्ववासिनीमिति पाठो भविष्ये । पठन्ति च—

सायं षष्ठ्यां तु कर्त्तव्यं पार्वत्या अधिवासनम् । षष्ठ्यभावेपि कर्तव्यं सप्तम्यामपि मानद ॥

देवीपुराणे—ज्येष्ठानक्षत्रयुक्तायां षष्ठ्यां बिल्वाभिमन्त्रणम् । सप्तम्यां मूलयुक्तायां पत्रिकायाः प्रवेशनम् ॥

पूर्वाषाढयुताष्टम्यां पूजाहोमाद्युपोषणम् । उत्तरेण नवम्यां तु बलिभिः पूजयेच्छिवाम् ॥

श्रवणेन दशम्यां तु प्रणिपत्य विसर्जयेत् ॥

Jain Education International For Private & Personal Use Only www.jainelibrary.org

अत्र तिथिनक्षत्रयोर्योगे मुख्यः कालः अतथात्वे तिथिर्ग्राह्या । तथाहि विद्यापतिधृता यमस्मृतिः—

तिथिः शरीरं देवानां तिथौ नक्षत्रमाश्रितम् । तस्मात्तिथिं प्रशंसन्ति नक्षत्रं न तिथिं विना ॥

अन्यच्च—तिथिनक्षत्रयोर्योगे द्वयोरेवानुपालनम् । योगाभावे तिथिर्ग्राह्या देव्याः पूजनकर्मणि ॥ इति

तदियं व्यवस्था । सप्तम्यामुदयगामिन्यां प्रातःकाले पत्रिकाप्रवेशस्तदव्यवहितपूर्वसायाह्ने बिल्वाभिमन्त्रणम् । तत्र षष्ठीतिथेर्ज्येष्ठानक्षत्रस्य च सद्भावः प्रशस्तः नात्यावश्यक इति ।

## ( ७ ) अथ सप्तमी-द्वैधः

सप्तमी तु षष्ठीयुता ग्राह्या । षण्मुन्योरिति युग्मात् । "सप्तमी नाष्टमीयुक्ता न सप्तम्यायुताष्टमीति" स्मृतेश्च । "षष्ठ्यष्टमी" त्यादि "नागविद्धे" त्यादि स्मृतिभ्यां पूर्वोक्ताभ्याञ्च । तथाहि—

भविष्ये—षष्ठीसमेता कर्तव्या सप्तमी नाष्टमीयुता । पतङ्गोपासनायेह षष्ठ्यामाहुरुपोषणम् ॥

एकादश्यां प्रकुर्वन्ति उपवासं मनीषिणः । आराधनाय द्वादश्यां विष्णोर्यद्वदियन्तथा ॥ इति ।

पत्रिकाप्रवेशे तु परयुता ग्राह्या । 'युगाद्या' इत्यादि तृतीयाप्रकरणोक्त देवीपुराणात् ॥ तथाहि—

ज्योतिःशास्त्रे—पूर्वाह्णे नवपत्रिका शुभकरी सर्वार्थसिद्धिप्रदा, आरोग्यं धनदा करोति विजयं चण्डीप्रवेशे शुभा ॥

मध्याह्ने जनपीडनक्षयकरी सङ्ग्रामघोरावहा, सायाह्ने वधबन्धनादिकलहं सर्पक्षतं सर्वदा ॥

सप्तम्यामस्तगायां यदि विशति गृहं पत्रिका श्रीफलाद्या
राज्ञः सप्ताङ्गराज्यं जनसुखमखिलं हन्ति मूलानुरोधात् ।
तस्मात् सूर्योदयस्थां नरपतिशुभदां सप्तमीं प्राप्य देवीम्
भूपालो वेशयेत्तां सकलजनहितां राक्षसर्क्षं विहाय ॥

Jain Education International For Private & Personal Use Only www.jainelibrary.org

राक्षसर्क्षं मूलम् , मूलानुरोधान्न प्रातःकालातिक्रमः किन्तु मूलमनादृत्य प्रातरेव प्रवेशयेदित्यर्थः ।

## ( ८ ) अथाष्टमी-द्वैधः

ब्रह्मवैवर्ते—नाष्टमी सप्तमीयुक्ता सप्तमी नाष्टमीयुता । नवम्या सह कार्या स्यादष्टमी सर्वदा बुधैः ॥

तथा—शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी । पूर्वविद्धा न कर्तव्या कर्तव्या परसंयुता ॥
उपवासेषु सर्वेषु एष धर्मः सनातनः ॥

तथा—अष्टमी नवमीविद्धा नवम्या चाष्टमी तथा । अर्धनारीश्वरप्राया उमामाहेश्वरी तिथिः ॥

तथा—कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी । पूर्वविद्धैव कर्तव्या परविद्धा न कुत्रचित् ॥

तथा—कृष्णपक्षे सदा कार्या अप्तम्या सहिताष्टमी ॥

विष्णुरहस्ये—कार्या विद्धापि सप्तम्या रोहिणीसहिताष्टमी । तत्रोपवासं कुर्वीत तिथिभान्ते च पारणम् ॥

तथा—जन्माष्टमी रोहिणी च शिवरात्रिचतुर्दशी । पूर्वविद्धा प्रकर्तव्या तिथिभान्ते च पारणम् ॥

तथा—श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी । पूर्वविद्धा प्रकर्तव्या शिवरात्रिर्बलेर्दिनम् ॥

एवमादिभिर्नानामुनिवचनैरष्टमी कृष्णपक्षे सप्तमीयुता ग्राह्या । शुक्ला तु दूर्वाष्टम्यतिरिक्ता नवमीयुता ग्राह्येति । कृष्णाष्टमीव्रतं चतुर्द्धा भिद्यते इति सिद्धवल्लिखन्ति । वाचस्पत्ये द्वैतनिर्णये तदेव स पल्लवीकृत्यात्र प्रदर्श्यते । तथाहि—

रोहिणी च यदा कृष्णपक्षेऽष्टम्यां द्विजोत्तम । जयन्ती नाम सा प्रोक्ता सर्वपापहरा तिथिः ॥

इति भविष्यपुराणीयं रोहिणीयोगपुरस्कारेण द्वादशमासीयासु अष्टमीषु जयन्तीव्रतम् । तत्र विहितस्य गोविन्दार्चनस्य प्राधान्यात् पूर्वाह्नप्राप्तरोहिण्यष्टमीयोग एवेत्येकम् ॥ १ ॥

रोहिणीसहिता कृष्णा मासि भाद्रपदेऽष्टमी । अर्धरात्रे तु योगोऽयं तारापत्युदये सति ॥

Jain Education International For Private & Personal Use Only www.jainelibrary.org

इति स्मृत्याऽर्द्धरात्रिके भाद्रकृष्णाष्टमीरोहिणीयोग एव पूजादिकं तिथिभान्ते च पारणमिति रोहिण्यष्टमीव्रतं द्वैतीयम् ॥ २ ॥

अथ भाद्रपदे मासि कृष्णाष्टम्यां कलौ युगे । अष्टाविंशतिमे जातः कृष्णोऽसौ देवकीसुतः ॥
तस्मात् स तत्र संपूज्यो यशोदा देवकी तथा । मुहूर्त्तेनापि संयुक्ता सम्पूर्णा साष्टमी भवेत् ॥
किं पुनर्नवमीयुक्ता कुलकोटिविमुक्तिदा । तृप्त्यर्थं देवकीसूनोर्जयन्तीसम्भवं व्रतम् ॥
कर्त्तव्यं मुक्तिकामेन तथा भक्तजनैरपि । अकुर्वन्निरयं याति यावदिन्द्राश्चतुर्दश ॥ इति ।

अत्रापि रोहिण्यादियोगे फलाधिक्यमाह—

स्कन्दपुराणे—उदये चाष्टमी किञ्चिन्नवमी सकला यदि । भवेद्वै बुधसंयुक्ता प्राजापत्यर्क्षसंयुता ।
अपि वर्षशतेनापि लभ्यते वा न वा विभो ।

तथा—जयन्तीबुधवारेण सोमवारेण वा पुनः । लभ्यते दैवयोगेन तामुपोष्य महाफलम् ॥

सप्तम्यविद्धालाभे सप्तमीविद्धानिषेधमाह—

अग्निपुराणे—वर्जनीया प्रयत्नेन सप्तमीसंयुताऽष्टमी । सऋक्षापि न कर्तव्या सप्तम्या सहिता यदि ॥
पद्मपुराणे—पञ्चगव्यं यथा शुद्धं न ग्राह्यं मद्यदूषितम् । रविविद्धा तथा त्याज्या रोहिण्यापि युताष्टमी ॥
तथा—पुत्रान् हन्ति पशून् हन्ति हन्ति राज्यं सराजकम् । हन्ति जातानजातांश्च सप्तमीसहिताष्टमी ॥

अस्मिंश्च व्रते पूजायाः प्राधान्येन श्रवणाद् उदयगामिनी पूर्वाह्णव्यापिन्यष्टम्येवापेक्ष्यते रोहिण्यादियोगस्तु फलातिशयार्थः । 'रात्रौ प्रजागरः कार्यः' इत्यादिना रात्रिकृत्यत्वेन जागरमात्रस्यैवाभिधानात् पूजाधारत्वेन रात्रेरश्रुतावौत्सर्गिकस्य पूर्वाह्णकृत्यत्वस्यानपवादादिदमेव सकलशिष्टमैथिलाचारपरिगृहीतं कृष्णजन्माष्टमीव्रतमिति तृतीयम् ॥ ३ ॥

Jain Education International For Private & Personal Use Only www.jainelibrary.org

चतुर्थन्तु हेमाद्र्यनुगृहीतं कृष्णजन्माष्टमीव्रतम् तत्र रोहिणीयोगः फलातिशयार्थ एव नात्यावश्यक इति द्वितीयस्माद्रोहिण्यष्टमीव्रताद्भेदः। निशीथे पूजाद्यभिधानान्निशीथव्यापिनी ग्राह्येति। तृतीयस्माद् भेद इति चतुर्थं कृष्णजन्माष्टमीव्रतमिति ॥ ४ ॥

पूर्वोक्तस्मृतीनां यथायथमुक्तचतुर्विधव्रतेषूद्देश्यतावच्छेदकाक्रान्ततत्तद्व्रतपरत्वेन विरोधाभावोऽनुसन्धेय इति ॥ आश्विनकृष्णाष्टमी लक्ष्मीव्रते चन्द्रोदयव्यापिनी ग्राह्या। तथाहि

स्मृतिः—पूर्वा वा परविद्धा वा ग्राह्या चन्द्रोदये सदा। त्रिमुहूर्तापि सा पूज्या परतश्चोर्ध्वगामिनी ॥

तथा—लक्ष्मीव्रतश्चाभ्युदिते शशाङ्के यत्राष्टमी चाश्विनकृष्णपक्षे।

यत्रोदयं वै कुरुते दिनेशस्तदा भवेज्जीवितपुत्रिकाख्या ॥ इति ॥

जीवितपुत्रिकाव्रते प्रदोषव्यापिनी ग्राह्या। यदाह—

भविष्ये—इषे मास्यसिते पक्षे चाष्टमी या तिथिर्भवेत्। पुत्रसौभाग्यदा स्त्रीणां ख्याता सा जीवपुत्रिका ॥

शालिवाहनराजस्य पुत्रो जीमूतवाहनः। तस्यां पूज्यः स नारीभिः पुत्रसौभाग्यलिप्सया ॥

प्रदोषसमये स्त्रीभिः पूज्यो जीमूतवाहनः। पुष्करिणीं विधायाथ प्राङ्गणे चतुरस्त्रिकाम् ॥ इति।

उभयदिने प्रदोषव्याप्तौ परा ग्राह्या, उदयव्याप्त्यनुरोधात्, तिथ्यन्ते पूर्वाह्णे पारणानुरोधाच्च, उपवासद्वयापत्त्यनुरोधाच्च। यत्र च नैकस्मिन्नपि वासरे प्रदोषव्याप्तिस्तत्रापि परैव। "यत्रोदयं वै कुरुते दिनेशः" इत्याद्युक्तपरमानन्दठक्कुरधृतस्मृतेः। यत्र पूर्वदिने प्रदोषव्याप्तिर्नोत्तरत्र प्रदोषव्याप्तिस्तत्र पूर्वदिने एव। तथाहि—

विष्णुधर्मोत्तरे—पूर्वेद्युरपरेद्युर्वा प्रदोषे यत्र चाष्टमी। तत्र पूज्यः स नारीभी राजा जीमूतवाहनः ॥

आश्विनस्याऽसिताष्टम्यां याः स्त्रियोऽन्नञ्च भुञ्जते। मृतवत्सा भवेयुस्ता विधवा दुर्भगा ध्रुवम् ॥

Jain Education International For Private & Personal Use Only www.jainelibrary.org

इति विष्णुधर्मोत्तरीयत्वेन लिखितं वचनं यदि प्रमाणं तर्हि एकादश्युपक्रमे—

भुञ्जन् गोमांसभक्षस्य पापमाप्नोति मानवः। यो भुङ्क्ते नीरुजः सोऽथ प्रेतश्चाण्डालतां व्रजेत्॥

इत्यादिभोजननिषेधार्थवादिकवचनवत् व्रतनित्यत्वावधारणार्थम्। भोजननिषेधमुखेनोपवासमेवाभिधत्ते वा, न तु पारणानिषेधार्थम्। "तिथिभान्ते च पारणम्" इति सामान्यवचनेनैवाष्टम्यान्तदप्राप्तेरिति।

आश्विनशुक्ला चाष्टमी निशापूजायां महानिशाव्यापिनी ग्राह्या। "कर्मणो यस्ये"त्यादिस्मृतेः। उभयदिने 'महानिशाव्याप्तौ परा ग्राह्या नवमीयोगप्राशस्त्यबलात्। यत्र पूर्वदिने एवं महानिशाव्यापिनी नोत्तरत्र 'तत्र' पूर्वदिने सप्तमीयुतैव। ग्राह्या, यदाह, विश्वरूपनिबन्धे—

महाष्टम्याश्विने मासि शुक्ला कल्याणकारिणी। सप्तम्या संयुता कार्या मूलेन तु विशेषतः॥

महाष्टम्यां भगवती भद्रायामपि पूजिता। ददाति चायुरारोग्यं यतो भद्रास्वरूपिणी॥

कुलं पुत्रं धनं धान्यं राज्यमायुस्तथैव च। प्रथमा चाष्टमी पूज्या यः काङ्क्षति सदा शुभम्॥

उपवासव्रते तूदयव्यापिनी ग्राह्या यदाह,

विष्णुधर्मोत्तरीये—अष्टम्या नवमीयुक्ता नवम्या चाष्टमीयुता। अर्धनारीश्वरप्राया उमामाहेश्वरी तिथिः॥ इति। एकादश्यष्टमीत्यादिपैठीनसिस्मृतेश्च। स्मृत्यन्तरेऽपि—

सप्तम्या चाष्टमीयुक्ता नवम्या चाष्टमीयुता। सर्वेषु व्रतकल्पेषु अष्टमी परतः शुभा॥ इति।

तथा—शरन्महाष्टमी पूज्या नवमी संयुता सदा। सप्तमी संयुता त्याज्या शोकसन्तापकारिणी॥

जम्भेन सप्तमीयुक्ता पूजिता च महाष्टमी। इन्द्रेण निहितो जम्भस्तस्माद् दानवपुङ्गवः॥

तस्मात् सर्वप्रयत्नेन सप्तमीसहिताष्टमी। वर्जनीया हि मनुजैरात्मनः शुभकाङ्क्षिभिः॥

Jain Education International For Private & Personal Use Only www.jainelibrary.org

सप्तमीशल्यसंयुक्तां मोहादज्ञानतोपि वा । महाष्टमीं प्रकुर्वाणो नरकं प्रतिपद्यते ॥

अत एव दिनकृत्ये उभयस्मिन् दिने तत्तिथिलाभे नवमीयुताष्टमी ग्राह्या । रात्रिकृत्ये तु रात्रिद्वये तल्लाभे एवमिति वाचस्पतिचरणाः ।

## ( ९ ) अथ नवमी-द्वैधः

नवमी पूर्वविद्धा ग्राह्या । यदाह,

ब्रह्मवैवर्ते—अष्टम्या नवमीविद्धा कर्तव्या फलकाङ्क्षिभिः । न कुर्यान्नवमीं तात दशम्या तु कदाचन ॥ इति ।

पाद्मेऽपि—अष्टमी नवमीयुक्ता नवमी चाष्टमीयुता । इति ।

स्मृतिः—कन्यागते सवितरि शुक्लपक्षेऽष्टमीयुता । मूलनक्षत्रसंयुक्ता सा महानवमी स्मृता ॥ इति ।

भविष्ये—अश्वयुक् शुक्लपक्षे तु अष्टमीमूलसंयुता । सा महानवमी नाम त्रैलोक्येपि सुदुर्लभा ॥ इति ।

दुर्गापूजासु मूलनक्षत्रसंयुता महती कीर्तिता । तस्यां दुर्गामहिषमर्दिनीत्यादि—स्मृतेश्च । नवमी पूर्वाह्णव्यापिनी चेदष्टमीविद्धा त्रिशूलिनीपूजादौ ग्राह्या । प्रभूततरबलिदाने तु—

देवीपुराणम्—अश्वयुक् शुक्लनवमी मुहूर्त्तं वा कला यदि । सा तिथिः सकला ज्ञेया लक्ष्मीविद्याजयार्थिभिः ॥

सौरधर्मे—सूर्योदये परा रिक्ता पूर्णा स्यादपरा यदि । बलिदानं प्रकर्तव्यं तत्र देशे शुभं भवेत् ॥ इति ।

बलिदानं दशासु चेति निषेधो नवम्ययुक्तासु वेदितव्यम् । तथा "बलिदाने कृतेऽष्टम्यां पुत्रभ्रंशो भवेन्नृपे"ति निषेधोऽपि प्रभूततरबलिदाने एव । पूजाङ्गबलिदानमष्टम्यां भवत्येवानवकाशत्वात् ।

चैत्रशुक्ला तु नवमी पुनर्वसुयुता यदि । सैव मध्याह्नयोगेन महापुण्यतमा भवेत् ॥

Jain Education International For Private & Personal Use Only www.jainelibrary.org

नवमी चाष्टमीविद्धा त्याज्या विष्णुपरायणैः। उपोषणं नवम्यान्तु दशम्यामेव पारणम् ॥

इत्यादि विष्णुपरायणैरिति तु विष्णुपरायणत्वेन भवितव्यमित्युपदेशपरम्, न तु कर्तृविशेषणम्, विधिद्वयकल्पनापत्तेः। एतेन वैष्णवैर्दशमीविद्धोपोष्या तदतिरिक्तैरष्टमीविद्धेति व्यवस्था हेयैव विधिद्वयकल्पनायामतिगौरवात्। एतञ्च सर्वैरेवौदयिकी ग्राह्या पारणन्तु दशम्यामेवेति सिद्धम्। मध्याह्नयोगः प्रशंसार्थः महापुण्यजनकत्वेन स्वीकृतत्वात्। पुनर्वसुयोगवद् आश्विनकृष्णानवम्यामाचारपरिप्राप्तमातृश्राद्धे सङ्गवात्मकमुहूर्तत्रयान्तर्गतपूर्वाह्णसम्बन्धिनी नवमी ग्राह्या। पूर्वाह्णे मातृकं श्राद्धमित्यादिब्रह्मपुराणात्। तत्र प्रातःपदस्य पृथगुपादानात् पूर्वाह्णपदस्य तादृशकालपरत्वं सामान्यविशेषन्यायात्।

## ( १० ) अथ दशमी-द्वैधः

सा च पूर्वस्मिन् परस्मिन् वा दिने विहितकालव्यापिनी ग्राह्या। तथाहि—

पद्मधरधृतस्मृतिः—संपूर्णा दशमी कार्या परया पूर्वयापि वा। युक्ता न दूषिता यस्मादिति सा सर्वतोमुखी ॥

तथा—दशम्येकादशीविद्धा कर्तव्या फलकाङ्क्षिभिः। दशमी चैव कर्तव्या सदुर्गा द्विजसत्तमा ॥ इति।

उभयदिने विहितकालव्याप्तौ परा ग्राह्या प्रधानप्रातःकालव्याप्त्यनुरोधात्। आश्विनशुक्ला विजयदशमी प्रातःकालिकी ग्राह्या। यदाह—

नन्दिकेश्वरः—प्रातरावाहयेद् देवीं प्रातरेव प्रवेशयेत्। प्रातः प्रातश्च सम्पूज्य प्रातरेव विसर्जयेत् ॥

तथा—भगवत्याः प्रवेशादिविसर्गान्ताश्च याः क्रियाः। पूर्वाह्णे एव कुर्वीत न तत्र तिथियुग्मता ॥

नारदः—इषस्य दशमीं शुक्लां पूर्वविद्धां न कारयेत्। श्रवणेनापि संयुक्तां राज्ञां पट्टाभिषेचने ॥

तथा—सूर्योदये यदा राजन् दृश्यते दशमीतिथिः। आश्विने मासि शुक्लान्तु विजयां तां विदुर्बुधाः ॥

Jain Education International For Private & Personal Use Only www.jainelibrary.org

तथा—स्तोकापि सा तिथिः पुण्या यस्यामभ्युदितो रविः ॥ इति ।

कालिकापुराणे—सम्यक्कल्पोदिता पूजा यदि कर्तुन्न शक्यते । उपचारांश्च संक्षिप्य पञ्चैतान् वितरेत्तदा ॥

गन्धं पुष्पञ्च धूपं च दीपं नैवेद्यमेव च । अभावे पुष्पतोयाभ्यां तदभावे तु भक्तितः ॥

संक्षेपपूजा कथिता यथाशास्त्रमथापि वा ॥

एवञ्च मुहूर्तमात्राप्युदयगामिनी दशमी देवीविसर्जनापराजितापूजादौ ग्राह्या । नृपाणान्तु दशम्यामपराह्णे सीमालंघनस्यावश्यकर्तव्यतया तस्य चापराजितापूजादेवीविसर्जनोत्तरकालिकत्वनियमेन सीमालंघनात्मकप्रधान-कार्यानुरोधात्तदन्तापकर्षन्यायेन नवमीयुतायामपि दशम्यां पूर्वाह्णे देवीविसर्जनमपराजितापूजनञ्च कार्यम् । तथाहि शिवरहस्यवचनम्—

कृत्यमहार्णवे—आश्विने शुक्लपक्षस्य दशम्यां पूजयेत्ततः । एकादश्यां न कुर्वीत पूजनञ्चापराजिताम् ॥

तथा—सीमालङ्घं प्रकुर्वीत दशम्यां सर्वदा नृपः । अपराह्णे प्रकुर्वीत ऐशानीं दिशमाश्रितः ॥

शाद्वले च विविक्ते च कृत्वा मूर्तिम्महीमयीम् । द्वे मूर्ती अपि कर्तव्ये तथा खड्गधनुर्द्धरे ॥

चत्वारः पर्वताः कार्याश्चतुर्दिक्षु समन्ततः ॥

यदि पूर्वदिने पूर्वाह्णे दशमी न लभ्यते तदोत्तरदिने पूर्वाह्णे अपराजितापूजा-देवीविसर्जने कृत्वाऽपराह्णे सति सम्भवे दशम्यां तदलाभे चैकादश्यामपि सीमालङ्घनं कार्यम् , दशमीपदस्यागत्या दशमीयुक्तैकादश्यामपि लक्षणाया निराबाधात् ।

## ( ११ ) अथैकादशी-द्वैधः

सा चोपवासादौ परा ग्राह्या । एकादश्यष्टमीत्यादिस्मृतेः । रुद्रेण द्वादशीयुक्तेति युग्मनिगमात् ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

एकादशी दशाविद्धा गान्धार्या समुपोषिता । तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जयेत् ॥

इति निन्दार्थवादानुरोधाच्च । किं चैकादशीमुपवसेदित्यत्राऽव्यभिचरितैकादश्यन्तिमभागयुताहोरात्रपरत्वस्यैव-(१)युक्तत्वाद् द्वादशीयुतैवोपोष्या । अत एव त्र्यहे वर्द्धमानैकादश्युपोषणं शास्त्रार्थः । न च पूर्वदिनेप्युदयगामित्वाद् दशम्यविद्धत्वाच्च कपालाधिकरणन्यायादुपोषणमास्तामुत्तरदिने तिथिमलत्वेनाग्राह्यत्वमस्त्विति वाच्यम्, 'सर्वं तिथिमलं त्याज्यमन्यत्र हरिवासराद्' इति स्मृतेः ।

षष्टिदण्डात्मिकायाश्च तिथेर्निष्क्रमणं परे । अकर्मण्यं तिथिमलं विद्यादेकादशीं विना ॥

इति स्मृतेश्च, पूर्वोक्तयुक्त्या च परैवोपोष्या वाचनिकव्यवस्थायां न्यायविरोधस्याकिञ्चित्करत्वात् । एकादशी-क्षयस्थले तु केचित् । पूर्वोक्तनिन्दार्थवादानुमितं दशमीविद्धामेकादशीं नोपवसेदिति श्रुतिवाक्यम् । तस्य च लाघवात् पर्युदासन्यायेन विधिवाक्येन सहैकवाक्यतया दशमीविद्धातिरिक्तैकादश्युपवासस्य शास्त्रार्थत्वात् । क्षयस्थले चैका-दश्या दशमीविद्धाया विद्धत्वस्पृष्टत्वादुत्तरदिने चालाभाद् व्रतलोप एव कृतसंकल्पेनाप्योदनादिकं भोक्तव्यमिति काश्चित्कशिष्टाचारानुप्राणितं प्रतिजानन्ति ।

भविष्ये—एकादशीं दशायुक्तां वर्द्धमाने विवर्जयेत् । पक्षहानौ स्थिते सोमे लङ्घयेद् दशमीयुताम् ॥

लङ्घयेदित्यस्य त्यजेदित्यर्थ इति च व्याचख्युः ।

परे तु—'वृद्धौ परा तु कर्तव्या क्षये पूर्वान्तु कारयेत्' इति स्मृत्यन्तरैकवाक्यतानुरोधाल्लंघयेदित्यस्योपवसेदि-त्यर्थस्यैवावगमात् ।

---

(१) उपवासस्याहोरात्राभोजनरूपतयोपवसपदश्रुत्या अहोरात्रस्यैवस्तथा च प्रधानोदयकालनिरूपितव्यभिचाराभाव-स्त्वव्यन्तिमभागयुताहोरात्रे एवेति भावः ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

एकादशी दशाविद्धा परतो न च वर्द्धते । गृहिभिर्यतिभिश्चैव सैवोपोष्या महातिथिः ॥

इति स्मृत्यन्तरैकवाक्यतानुरोधाच्च । एकादशीक्षयस्थले दशमीविद्धैकादश्युपोषणीशास्त्रार्थः । दशम्यविद्धैकादशीलाभे सत्येव दशमीविद्धैकादशीपरित्यागे निषेधवचनानां तात्पर्यावधारणादित्याहुः । न चेदृशस्थले 'एकादशीमुपवसेद् द्वादशीमथवा पुनः । विमिश्रां वा प्रकुर्वीत न दशम्या युतां क्वचित् ॥' इति स्मृत्या द्वादश्युपोषणमेवास्त्विति चेत् सत्यम् । भवेदेवं यदीदं गौडीयवचनं प्रमाणं स्यात्तदेव न । यदाहुः—वस्तुतस्तु वचनमेवेदमनाकरं राजाद्यलिखितत्वादिति कृत्यमहार्णवे वाचस्पतिचरणाः । ननु यत्र च द्वादशीक्षयस्तत्र द्वादश्यां पारणानुरोधाद्दशमीविद्धैकादश्युपवासोऽस्तु इति चेन्न अङ्गे पारणादौ द्वादशीबाधस्याकिञ्चित्करत्वात् ।

कलाप्येकादशी यत्र परस्ता, द्वादशी न चेत् । पुण्यं क्रतुशतस्योक्तं त्रयोदश्यां तु पारणे ॥

इति स्मृतिकौमुदीधृतस्मृतेः ।

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी । त्रिस्पर्शात्तदहोरात्रं पुण्यं साहस्रिकं भवेत् ॥

इति स्मृत्यन्तराच्च तस्यैव बहुपुण्यजनकत्वादित्यलं बहुना ।

## ( १२ ) अथ द्वादशी-द्वैधः

सा चोपवासादिषु सति सम्भवे एकादशीयुता ग्राह्या रुद्रेण द्वादशीयुक्तेति युग्मवाक्यात् । कामविद्धो भवेद्विष्णुरिति त्रयोदशीविद्धाया निषेधश्रवणाच्च ।

आ-भा-का-सितपक्षेषु मैत्रश्रवणरेवती । द्वादशीबुधवारेण हरेर्वासर उच्यते ॥

मैत्रमनुराधा । अत्र मासनक्षत्रयोः क्रमिकान्वयः । बुधवारेणेति सर्वत्राभिसंबध्यते ।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

तथा—द्वादश्यां शुक्लपक्षे तु नभस्ये श्रवणा यदि । उपोष्यैकादशीं तत्र द्वादशीमप्युपोषयेत् ॥
ब्रह्माण्डपुराणे—द्वादश्यास्तु दिने भाद्रे हृषीकेशर्क्षसंयुते । उपवासद्वयं कुर्याद्विष्णुप्रीणनतत्परः ॥
तथा—द्वादश्येकादशी सौम्यं श्रवणं च चतुष्टयम् । देवदुन्दुभियोगोऽयं शतसत्रफलप्रदः ॥
वराहपुराणे—एकादशीमुपोष्यैव द्वादशीमप्युपोषयेत् । न चात्र विधिलोपः स्यादुभयोर्दैवतं हरिः ॥
पारणान्तं व्रतं ज्ञेयं समाप्तौ द्विजभोजनम् । असमाप्ते व्रते पूर्वे कुर्यान्नैव व्रतान्तरम् ॥

यत्र चैकादश्यां द्वादशीक्षयस्तत्रैकेनोपवासेनोभयसिद्धिरिति बोध्यम् । अशक्तं प्रत्याह—

बौधायनः—एवमेकादशीं भुक्त्वा द्वादशीं समुपोषयेत् । उपवासद्वयं कर्तुं न शक्नोति नरो यदि ॥
कार्मुके च यदा जीवे पुष्ये सौभाग्यसंयुते । फाल्गुनस्य सिते पक्षे द्वादशी रविवासरे ॥
गोविन्दद्वादशी नाम महापातकनाशिनी ।

तथा—फाल्गुने शुक्लपक्षस्य पुष्यार्के द्वादशी यदि । गोविन्दद्वादशी नाम महापातकनाशिनी ॥ इति ।

## ( १३ ) अथ त्रयोदशी-द्वैधः

सा च शुक्ला पूर्वयुता ग्राह्या । तथाहि—

बौधायनः—पञ्चमी सप्तमी चैव दशमी च त्रयोदशी । प्रतिपन्नवमी चैव कर्तव्या सम्मुखी तिथिः ॥
तथा—कृष्णाष्टमी बृहत्तपा सावित्री वटपैत्रकी । कामत्रयोदशी रम्भा उपोष्याः पूर्वसंयुताः ॥
तथा—शुक्ला त्रयोदशी रम्भा नोपोष्याः परसंयुताः ॥ कृष्णपक्षे तु परैव तथाहि—
आपस्तम्बः—षष्ठ्यष्टमी त्वमावास्या कृष्णपक्षे त्रयोदशी । एताः परयुता ग्राह्याः पराः पूर्वेण संयुताः ॥

Jain Education International For Private & Personal Use Only www.jainelibrary.org

चैत्रकृष्णायामाह, स्कन्दपुराणे—

वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी। गङ्गायां यदि लभ्येत सूर्यग्रहशतैः समा ॥
शनिवारेण संयुक्ता सा महावारुणी स्मृता। गङ्गायां यदि लभ्येत कोटिसूर्यग्रहैः समा ॥
शुभयोगसमायुक्ता शनौ शतभिषा यदि। महामहेति विख्याता त्रिकोटिकुलमुद्धरेत् ॥

अत्राऽखण्डयोगे पूर्वाह्ण एव स्नानादिकार्यम्। तत्रैव तेषां विधानात्। खण्डयोगे तु यस्मिन् काले योगो लभ्यते तत्रैव, ग्रहणवत्। अत्राहुः महाफलश्रुते रात्रावपि योगसन्निपाते (गङ्गायां) स्नानादिकार्यमित्युमापतयः। सारसंग्रहे पठन्ति च—

दिवा रात्रौ च सन्ध्यायां गङ्गायान्तु विशेषतः। स्नात्वाऽश्वमेधजं पुण्यं गृहेऽप्युद्धृततज्जलैः ॥

भविष्येऽपि—सर्व एव शुभः कालः सर्वो देशस्तथा शुभः। सर्वो जनस्तथा पात्रं स्नानादौ जाह्नवीजले ॥

वारपदोपादानात् वारपदस्य सूर्योदयास्तावधिकालपरत्वौत्सर्गिकतया रात्रौ स्नानादिकं नाचरणीयम्। राहुदर्शनादिप्रसूतेतरकर्मणि सर्वत्र पर्युदस्तत्वात्। अत एव सोमारात्रौ अमावास्यालाभे न सोमवारव्रतमिति। "दिवैव योगः शस्तोयं न तु रात्रौ कदाचने"ति वचनं न्यायमूलकमेवेति बोध्यम्।

## (१४) अथ चतुर्दशी-द्वैधः

'सा शुक्ला परा ग्राह्या चतुर्दश्याथ पूर्णिमा' इति युग्मवचनात्। एकादश्यष्टमीत्यादि तृतीयाप्रकरणलिखितबृहस्पतिविष्णुधर्मोत्तरवचनाच्च। 'उदये त्रिमुहूर्तापि ग्राह्यानन्तव्रते तिथिः' इति माधवीयाच्च।

भविष्ये—तथा भाद्रपदस्यान्ते चतुर्दश्यां द्विजोत्तम। पौर्णमास्याः समायोगे व्रते चानन्तकं चरेत् ॥

स्कन्दे—मुहूर्तमपि चेद् भाद्रे पूर्णिमायां चतुर्दशी। संपूर्णा तां विदुस्तस्यां पूजयेद्विष्णुमव्ययम् ॥ इति।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

नव—मध्याह्ने भोज्यवेलायां समुत्तीर्य सरित्तटे । ददर्श शीला सा स्त्रीणां समूहं रक्तवाससाम् ॥
चतुर्दश्यामर्चयन्तं भक्त्या देवं पृथक् पृथक् ॥

इति भविष्योत्तरीयमध्याह्नव्यापिनी तिथिर्ग्राह्येति वाच्यम् । "पूर्वाह्णो वै देवानामि"ति श्रुत्यादिभिः पूर्वाह्णे देवकृत्यविधानात् । विध्यसमभिव्याहृतार्थवादेन तद्बाधायोगात् । किंच 'मध्याह्ने' इति नाधिकरणसप्तमी, किन्तु सति सप्तमी, तथा च मध्याह्ने आगामिनि सति ततः प्रागेव स्नानसन्ध्यावन्दनाद्याह्निकं कर्म कर्तुं कौण्डिन्यः शीला च गोरथादुत्तीर्य पूर्वाह्णे स्त्रीणां समूहं सा ददर्शेत्यन्वयस्यापि सम्भवादिति न किञ्चिदेतत् ।

कृष्णा तु पूर्वयुतैव । "कृष्णपक्षेऽष्टमी चैवे"त्याद्युक्तस्मृतेः । नक्तव्रते तु तद्व्यापिन्येव ग्राह्या "कर्मणो यस्य यः कालः" इत्याद्युक्तस्मृतेः । उभयदिने नक्तव्याप्तौ पूर्वस्मिन्नेव कपालाधिकरणन्यायादिति समयप्रदीपः । "कामविद्धो हरः पूज्यः" इति वचनसंवादादिति जीर्णोद्धारः ।

स्कान्दे—माघमासस्य शेषे या प्रथमे फाल्गुनस्य च । कृष्णा चतुर्दशी सा तु शिवरात्रिः प्रकीर्तिता ॥

अत्रैकस्यास्तिथेः शुक्लादिमासरीत्या माघीयत्वम् । कृष्णादिमासरीत्या फाल्गुनीयत्वमप्यविरुद्धम् । सन्देहनिरासार्थमित्थमुक्तिः । हेमाद्रिधृतस्मृतिः—प्रदोषव्यापिनी ग्राह्या शिवरात्रिचतुर्दशी । इति ।

वायुपुराणे—त्रयोदश्यस्तगे सूर्ये चतसृष्वपि नाडिषु । भूतविद्धा तु या तत्र शिवरात्रिव्रतं चरेत् ॥

ईशानसंहितायाम्—माघे कृष्णचतुर्दश्यामादिदेवो महानिशि । शिवलिङ्गतयोद्भूतः कोटिसूर्यसमप्रभः ॥
तत्कालव्यापिनी ग्राह्या शिवरात्रिव्रते तिथिः । अर्धरात्रादधश्चोर्ध्वं युक्ता यत्र चतुर्दशी ॥
व्याप्ता सा दृश्यते यस्यां तस्यां कुर्याद् व्रतं नरः ॥

एवं च यस्मिन् दिने प्रदोषनिशीथोभयव्यापिनी चतुर्दशी तस्मिन् दिने व्रतम् । उभयव्याप्त्यनुरोधात् । यदा

Jain Education International For Private & Personal Use Only www.jainelibrary.org

तु पूर्वेद्युर्निशीथमात्रव्याप्तिः परदिने प्रदोषमात्रव्याप्तिः । तदा पूर्वत्र व्रतम् । प्रधानकालानुरोधात् । तथाहि—

ईशानसंहितायां—पूर्वेद्युरपरेद्युर्वा महानिशि चतुर्दशी । व्याप्ता सा दृश्यते यस्यां तस्यां कुर्याद् व्रतं नरः ॥

भविष्ये—अर्धरात्रात् पुरस्तात्तु जयायोगो भवेद्यदि । पूर्वविद्धैव कर्त्तव्या शिवरात्रिः शिवप्रियैः ॥

विष्णुधर्मोत्तरीये—जयन्ती शिवरात्रिश्च कार्ये भद्राजयान्विते । कृत्वोपवासं तिथ्यन्ते तदा कुर्याच्च पारणम् ॥

तिथ्यन्ते पारणं जयन्तीमात्रपरम् । अत्र चतुर्दश्यामपि पारणप्राशस्त्यात् ।

स्कान्दे—ब्रह्माण्डोदरमध्ये तु यानि तीर्थानि सन्ति वै । पूजितानि भवन्तीह भूतायां पारणे कृते ॥ इति ।

गौतमः—दिनमानप्रमाणेन या तु रात्रौ चतुर्दशी । शिवरात्रिस्तु सा ज्ञेया चतुर्दश्यान्तु पारणम् ॥

यदा तु पूर्वदिने न निशीथव्याप्तिः परदिनेपि प्रदोषमात्रव्याप्तिः तदा परा ग्राह्या । "प्रदोषव्यापिनी"त्यादि प्रागुक्तस्मृतेस्त्रिसन्ध्यव्यापित्वाच्च । एतद्विषय एव—लिंगपुराणम्—'शिवरात्रिव्रते भूतां कामविद्धां विवर्जयेत् । एकेनैवोपवासेन ब्रह्महत्यां व्यपोहति ॥' अत्रामावास्यामेव पारणम् । तथाहि—तिथितत्त्वधृता स्मृतिः—

शिवा घोरा तथा प्रेता सावित्री च चतुर्दशी । कुहूयुक्तैव कर्त्तव्या कुह्वामेव हि पारणम् ।

## ( १५ ) अथाऽमावस्या-द्वैधः

सा च प्रतिपद्युता ग्राह्या युग्मनिगमात्, "एकादश्यष्टमी"त्यादि पैठीनसिस्मृतेश्च । लक्ष्मीपूजायां कार्त्तिकामावास्या प्रदोषव्यापिनी ग्राह्या । यदाह—भविष्योत्तरे—प्रदोषे पूजयेद् देवीं पद्महस्तां हरिप्रियाम् ॥ इति ।

तथा—प्रदोषसमये लक्ष्मीं पूजयित्वा यथाविधि । ब्राह्मणान् भोजयित्वा च भोजयेच्च बुभुक्षितान् ॥

उभयदिने प्रदोषव्याप्तौ परा ग्राह्या, उत्तरदिने प्रदोषाव्याप्तौ पूर्वदिने प्रदोषव्याप्तौ पूर्वा ग्राह्या तथाहि,

राजमार्त्तण्डे—दण्डैकं रजनीं प्रदोषसमये दर्शो यदा संस्पृशेत् । कर्त्तव्या सुखरात्रिकात्र विधिना दर्शाद्यभावे तदा ॥

Jain Education International For Private & Personal Use Only www.jainelibrary.org

पूज्या चाऽजधरा सदैव च तिथिः, सैवाहनि प्राप्यते । कार्या भूतविमिश्रिता जगुरिति व्यासादिगर्गादयः ॥

उत्तरदिने सूर्यास्तात् परैकदण्डव्यापिन्यप्यमावास्या ग्राह्या, तत्रारब्धा पूजा प्रतिपद्यपि सम्पादनीया यदि चोत्तरत्र दिवैव दर्शः प्राप्यते समाप्यते । पूर्वदिने च प्रदोषे लभ्यते तदा चतुर्दशीविद्धापि ग्राह्येत्यर्थः ।

ज्योतिःशास्त्रे—दण्डैकरजनीयोगे दर्शः स्याच्च परेऽहनि । तदा विहाय पूर्वेद्युः परेऽह्नि सुखरात्रिका ॥

अमावास्या यदा रात्रौ दिवाभागे चतुर्दशी । पूजनीया तदा लक्ष्मीर्विज्ञेया सुखरात्रिका ॥

इति वचनद्वयमुभयत्र प्रमाणं वेदितव्यम् । अत्रैव निशीथे श्यामापूजा यदाह—

कामाख्यातन्त्रे—शरत्काले च देवेशि दीपयात्रादिने तथा । अमावास्यां समासाद्य मध्यरात्रौ विचक्षणः ॥

मृन्मयीं पुत्तलीं कृत्वा दीपादिभिरलं कृताम् । बलिं नानाविधं दद्याद्वाद्यभाण्डसमन्वितम् ॥

नृत्यं गीतं कौतुकानि यावत्सूर्योदयं चरेत् । प्रातःकाले शुद्धतोये स्थापयेदविनाशिनीम् ॥

अत्र मध्यरात्रश्रवणात् निशीथव्यापिनी ग्राह्या । भविष्येऽपि—प्रतिसंवत्सरं कुर्यात् कालिकाया महोत्सवम् ।

कार्त्तिके तु विशेषेण अमावास्या निशार्धके ॥ तस्यां सम्पूजयेद् देवीं भोगमोक्षप्रदायिनीम् ॥

कुलसर्वस्वे—उभयदिने निशीथव्याप्तौ प्रदोषव्याप्तिर्नियामिका । प्रदोषव्यापिनी यत्र महानिशि च सा भवेत् ॥

तदैव कालिका पूज्या दक्षिणा मोक्षदायिनी ॥ यदि चोभयदिने तथा तदा चतुर्दशीयुता ग्राह्या तथाहि—

आगमे—अर्धरात्रे महेशानि अमावास्या यदा भवेत् । चतुर्दशीयुता ग्राह्या चामुण्डापूजने सदा ॥

तथा—यत्रोभयदिने भूतयुक्तकुह्वां महानिशि । इमां यात्रां कारयित्वा चक्रवर्ती नृपो भवेत् ॥

शनिभौमदिनानुरोधात् प्रदोषव्यापिन्यपि निशीथव्यापिनी ग्राह्या । तथाहि—

चतुर्दशी प्रदोषे तु अमावास्या महानिशि । शनि-भौमदिने देवि निशायां सर्वथा यजेत् ॥

Jain Education International For Private & Personal Use Only www.jainelibrary.org

तदतिरिक्तदिने यदि पूर्वदिने प्रदोषव्यापिनी उत्तरदिने च प्रदोषनिशीथोभयव्यापिनी तदोत्तरैव ग्राह्या, तथाहि—

कुलसर्वस्वे—महानिशादिने देवि प्रतिपच्च यदा भवेत्। कालीकैवल्ययोगोयं तद्दिने कालिकार्चनम्॥

कालीत्युपलक्षणम्। त्रिपुरसुन्दरी-तारयोरप्यत्र महोत्सवः कार्यः। यदाह—

मत्स्यसूक्ते—पूजयेत् परया भक्त्या रात्रेर्मध्यमयामयोः। कालीं तारां सुन्दरीं च विशेषात् प्राणवल्लभे॥

कार्तिकामावास्यानिशीथे चतुर्दण्डात्मके प्रथमखण्डे श्रीविद्याप्रादुर्भावः। मध्यभागे कालीप्रादुर्भावः। तृतीयभागे ताराप्रादुर्भावः इत्यागमाकरग्रन्थात् प्राणतोषिण्यादिनिबन्धाच्चानुसन्धेय इति।

## अथ महालये पार्वणश्राद्धमाहात्म्यम्

येयं दीपान्विता राजन् ख्याता पञ्चदशी भुवि। तस्यां देयं नचेद्दत्तं पितृणान्तु महालये॥

तथा—कन्यां गते च सवितरि पितृराजानुशासनात्। तावत्प्रेतपुरी शून्या यावद्वृश्चिकदर्शनम्॥

ततो वृश्चिक आयाते निराशाः पितरो गताः। पुनः स्वभवनं यान्ति शापं दत्त्वातिदारुणम्॥

इत्यादिवचनैरकृतापरपक्षपार्वणे नात्र पार्वणस्यावश्यकर्तव्यतया अमावास्यात्वेनापि पार्वणश्राद्धार्हतया श्राद्धकालो निर्णीयते—

## अथ श्राद्धकालः

पूर्वाह्णे मातृकं श्राद्धमपराह्णे तु पैतृकम्। एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम्॥

अत्राभ्युदयिकश्राद्धस्य प्रातर्विधानेपि "सूर्ये चैवाचिरोदिते" इति निषेधसामान्येन मुहूर्त्तद्वयानन्तरं प्रातरेवारम्भणीयता सङ्गवात्मके पूर्वाह्णे मातृकमन्वष्टकाश्राद्धं मातृनवम्यादौ कार्यम्। एकोद्दिष्टश्राद्धं कुतुपादारभ्य रौहिणं

Jain Education International For Private & Personal Use Only www.jainelibrary.org

यावत् कर्तव्यम् । यदि पूर्वदिने कुतुपे न लभ्यते तिथी रौहिणे च लभ्यते। उत्तरदिने कुतुपे रौहिणेपि लभ्यते तत्रापि पूर्वदिने रौहिणे कार्यम् । कपालाधिकरणन्यायात् । रौहिणं न तु लङ्घयेदिति विशिष्याभिधानाच्च । उभयदिने कुतुपरौहिणयोस्तिथिलाभेप्येषैव व्यवस्था । उभयदिने कुतुपरौहिणयोस्तिथ्यलाभे कुतुपात् पूर्वस्मिन् सप्तममुहूर्ते मध्याह्नान्तर्गते कार्यम् । तत्रापि तिथ्यलाभे पार्वणोक्तगौणकालेऽपि कार्यम् । अत एव सङ्गवादावपीति रुद्रधरः। पैतृकं पार्वणश्राद्धम् , तच्च प्रातःसायाह्नमुहूर्तातिरिक्तेषु नवसु मुहूर्तेषु कर्तव्यम् । केचित्तु—"सूर्ये चैवाचिरोदिते"ति निषेधविषयस्य मुहूर्तद्वयस्य परित्यागेन मुहूर्तदशकं श्राद्धकालमाहुः । पठन्ति च—ऊर्ध्वं मुहूर्तात् कुतुपाद्यन्मुहूर्तचतुष्टयम् । मुहूर्तपञ्चकं च कुतुपात् पूर्वं कुतुपेन सह ॥ मुहूर्तदशकं पार्वणश्राद्धकालः । उभयदिने कर्मयोग्यकाललाभे पूर्वदिने कार्यं पूर्वोक्तयुक्तेः । अत एवाहुः स्मृतिसारे हरिनाथपादाः—

दर्शं च पौर्णमासं च पितुः सांवत्सरं दिनम् । पूर्वविद्धमकुर्वाणो नरकं प्रतिपद्यते ॥
भूतविद्धाप्यमावास्या प्रतिपन्मिश्रितापि वा । पित्र्ये कर्मणि विद्वद्भिर्ग्राह्या पुण्या सदा तिथिः ॥
मध्याह्नव्यापिनी या तु तिथिः पूर्वा परापि वा । तदहः कर्म कुर्वीत ह्रासवृद्धी न कारणम् ॥

## अथ दीपावल्यामुल्काभ्रमणविचारः

तुलासंस्थे सहस्रांशौ प्रदोषे भूतदर्शयोः । उल्काहस्ता नराः कुर्युः पितॄणां मार्गदर्शनम् ॥

इत्यत्र प्रदोषश्रवणात् प्रदोषव्यापिन्यमावास्या ग्राह्या । उभयदिने प्रदोषव्याप्तौ परैव । पितृविसर्जनात्मककर्मणः पार्वणोत्तरत्वौचित्यात् । "दण्डैकरजनीयोगे" इत्याद्युक्तज्योतिर्वचनात् ,

भूताहे ये प्रकुर्वन्ति उल्काग्रहमचेतनाः । निराशाः पितरो यान्ति शापं दत्त्वातिदारुणम् ॥

इति निषेधाच्च । उत्तरत्र प्रदोषाव्याप्तौ पूर्वत्र । कर्मकालव्यापनात् । "नन्दायां दर्शनं रक्षे"त्यादिना प्रतिपदि

Jain Education International For Private & Personal Use Only www.jainelibrary.org

निषेधाच्च ।। उभयत्र प्रदोषाव्याप्तौ, परत्र प्रदोषे प्रतिपदि कार्यम् । "पूर्वत्र चतुर्दश्यां भूताहे ये" इत्यादिनिषेधश्रवणात्, पार्वणोत्तरत्वानुरोधाच्च । न च "नन्दायां दर्शनं रक्षे"त्याद्युत्तरत्रापि निषेधश्रवणात् त्यज्यतां तादृशस्थले पितृविसर्जनमिति वाच्यम् ,"दर्शश्राद्धं भवेद् दर्शेऽपराह्णे प्रतिपद्यपि । प्रदीपोल्कादिकं कार्यं तत्प्रदोषे न दुष्यति ॥"

इति मिथिलेशशुभंकरधृतस्मृत्या प्रतिप्रसूतत्वादित्यास्तां तावत् ।

## अथ पूर्णिमा-द्वैधः

सा च स्नानदानादावौदयिकी ग्राह्या, तत्रैव तयोर्विधानात् । कार्यान्तरे चतुर्दशीयुता ग्राह्या । "चतुर्दश्याथ-पूर्णिमे"ति । युग्मवाक्यात् । फाल्गुनीपूर्णिमा तु होलिकादाहे प्रदोषव्यापिनी ग्राह्या । यदाह—

सायाह्ने होलिकां कुर्यात् पूर्वाह्णे क्रीडनङ्गवाम् । दीपं दद्यात् प्रदोषे तु एष धर्मः सनातनः ॥

अत्र सायाह्नशब्देन संकेतितस्य दिनचरममुहूर्तत्रयस्य न ग्रहणं दिवातनहोलिकादीपननिषेधस्य वक्ष्यमाणत्वात् । यदि प्रदोषे भद्रादुष्टैव पूर्णा लभ्यते तदा तां विहाय निशीथादावपि भद्राविधुरपूर्णायां दीपयेत् यदाह—

श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी । पूर्वविद्धैव कर्तव्या भद्रायां न तु दीपयेत् ॥

पूर्णिमापूर्वार्द्धे भद्रा तदाह—

भविष्यपुराणे—पूर्णापूर्वदलं यावत् तावज्जीवति वत्सरः । मृते परदले नक्तं दाहस्तस्य विधीयते ॥

भद्रायां दीपिता होली राज्यभङ्गं करोति च । नगरस्य च नैवेष्टा तस्मात्तां परिवर्जयेत् ॥

स्मृत्यन्तरेपि—दिनार्धात् परतोपि स्यात् फाल्गुनी पूर्णिमा यदि । रात्रौ भद्रावसाने तु होलिका दीप्यते तदा ॥

सूर्यास्तसमयमारभ्य प्रवर्तमानायां परदिने च प्रदोषमस्पृशन्त्यां पूर्णायां व्यवस्थानाहुर्दाक्षिणात्याः । मुखादि पुच्छान्तं भद्राङ्गविभागं कृत्वा पूर्वस्यां निशि चतुर्थयामे भद्रापुच्छे होलिका दीपनीयेति । पठन्ति च—"भद्रामुखं

Jain Education International For Private & Personal Use Only www.jainelibrary.org

परित्यज्ये"त्यादिवचनं नाडयस्तु पञ्चवदनं गलकं तथैके इत्यादि रत्नमालीयञ्च। "भद्रापुच्छे प्रदीपयेदि"ति च। अन्ये तु भविष्योत्तरे—सार्धयामत्रयं चेत् स्यात् द्वितीयदिवसे यदि। प्रतिपद्वर्धमाना तु तदा सा होलिका स्मृता॥

तथा—असत्यामपि पूर्णायां वृद्धित्वे होलिकार्चनम्। क्रियमाणं च नन्दायां शान्तिर्भवति नो क्षयः॥

पूर्वरात्रे भद्रावियुक्तपूर्णाया अलाभे वर्धमानायां च तिथौ नन्दायामपि होलिकां दीपयेदित्याहुः।

केचित्तु—"वरं विषं भुङ्क्ष्व मा चाण्डालगृहे" इति वत् भद्रायामत्यन्तनिषेधे तात्पर्यं न तु नन्दायां दीपने इत्याहुः। पठन्ति च—वह्नौ वह्निं परित्यजेत्, होलिकादाहे प्रतिपदं वर्जयेदिति तस्यार्थः।

विद्याविनोदे—नन्दायां नरकं घोरं भद्रायां देशनाशनम्। दुर्भिक्षं च चतुर्दश्यां करोत्येव हुताशनः॥

नारदः—प्रतिपद्भूतभद्रासु यार्चिता होलिका दिवा। संवत्सरे च तद्राष्ट्रं पुरं दहति साद्भुतम्॥

परे तु पूर्वनिशि भद्रावियुक्तपूर्णिमालाभे प्रतिपदि निषेधे वचनानां तात्पर्यमित्याहुः। श्रावणीपूर्णिमोपाकर्मादावौदयिकी ग्राह्या। रक्षिकाबन्धने भद्रापरित्यागश्च कार्यः पूर्वोक्तयुक्तेः। भाद्रीपूर्णिमा ऋषितर्पणादावौदयिकी ग्राह्या—

षष्ठ्येकादश्यमावास्या पूर्वविद्धा तथाष्टमी। पूर्णिमा परविद्धा तु नोपोष्यं तिथिपञ्चकम्॥

इत्यादिनिषेधस्तु सावित्रीव्रतविषय इति। आश्विनीपूर्णिमा तु स्नानदानादावौदयिकी ग्राह्या। लक्ष्मीपूजायान्तु सति सम्भवे निशीथप्रदोषोभयव्यापिनी ग्राह्या तदलाभे प्रदोषमात्रव्यापिनी ग्राह्या यदाह—

ब्राह्मे—दिवा तत्र न भोक्तव्यं मनुष्यैश्च विवेकिभिः। स्त्रीबालवृद्धमूर्खैश्च भोक्तव्यं पूजितैः सुरैः॥

प्रदोषे पूजयेल्लक्ष्मीमिन्द्रमैरावतस्थितम्। निशीथे वरदा लक्ष्मीः कोजागर्तीति भाषिणी॥

तस्मै वित्तं प्रयच्छामि अक्षैः क्रीडां करोति यः॥ इति शम्।

Jain Education International For Private & Personal Use Only www.jainelibrary.org

## उपसंहारः

विदेहवसुधापतौ नृपतिचक्रचूडामणौ, विदेहगुणलक्षिते सकलनीतिपारङ्गते ।
विराजति रमेश्वरे विविधधर्मरत्नाकरे, मया द्विजरजेविदा तिथिषु निर्णयो निर्मितः ॥ १ ॥
पूर्वोत्तराम्नायक्रियानुरक्तः परात्मबोधेऽनुपलं प्रसक्तः ।
सिद्धचष्टकावाप्तिमहत्त्वतुल्यः सदाशिवः किन्तु रमेश्वरोऽभूत् ॥ २ ॥
सतीवियोगे गिरिजाविवोढा शम्भुश्च ताभ्यां युगपद्विहर्तुम् ।
जातः स च श्रीलरमेश्वरस्तत् प्रासोष्ट पुत्रौ महिषी कनिष्ठा ॥ ३ ॥
पुरा सुरसरिद्गति-प्रबलवेगसोढा शिवः, कलावपि तदुत्पथात् पुनरपीह रोद्धुं क्षमः ।
स एव च रमेश्वरो जयति धर्मरत्नाकरो, भगीरथकथा वृथा जगति जायते सर्वथा ॥ ४ ॥
उमेश्वरः श्रीलरमेश्वरो वा, योगीश्वरो वा जगदीश्वरो वा ।
सनातनं धर्ममनामयं वै, कर्तुं पुमान् प्रादुरभूदपूर्वः ॥ ५ ॥
श्रीमद्रमेश्वरयशोऽक्षविधुं निरीक्ष्य, धाता विधुं निजकृतं मलिनं परीक्ष्य ।
पूर्णं छिनत्ति च शनैः पुनरातनोति, साम्यं न जायत इतो यतते भृशं सः ॥ ६ ॥

प्रतिष्ठितस्यापि मम प्रयासो भूयान्मुदे सज्जनपण्डितानाम् ।
मुखं पिधातुं बत दुर्जनानां नेष्टे महेशो न च वा रमेशः ॥
व्रतनिर्णयः शुद्धिनिर्णयः तीर्थनिर्णयश्च यथावकाशं प्रकाशमेष्यन्ति ॥
इति श्रीरजेऽपरनामक-रामनाथशर्मकृते निर्णयसंग्रहे तिथिनिर्णयः समाप्तः ।



Jain Education International For Private & Personal Use Only www.jainelibrary.org

# काशी-मिथिला-ग्रन्थमाला

१ वाजसनेयिनां संक्षिप्ताह्निकम् । १–००
२ छन्दोगानां संक्षिप्ताह्निकम् । ६–००
३ छन्दोगानां सन्ध्यातर्पणपद्धतिः । १–५०
४ वाजसनेयिनां सन्ध्यातर्पणपद्धतिः, संक्षिप्तसन्ध्यावन्दनादि-परिशिष्ट-विभूषिता । २–५०
५ षडङ्गशतरुद्रीयपद्धतिः । यंत्रस्थ
६ वाजसनेयिनां छन्दोगानाञ्च आभ्युदयिकश्राद्धपद्धतिः । जूटिकाबन्धन-मातृकापूजासहिता । ४–००
७ सूर्यादिद्वादशस्तवीस्तोत्र-अन्नपूर्णादिस्तोत्रसहितम् २–५०
८ मिथिलादेशीया कथासहिता श्रीसत्यनारायणपूजापद्धतिः । 'इन्दुमती'-टिप्पणी-विभूषिता । यंत्रस्थ
९ मिथिलादेशीया कथासहिता श्रीसत्यनारायणपूजापद्धतिः । 'इन्दुमती'-टीका-विभूषिता । १०–००
१० छन्दोगानाम् एकोदिष्टपद्धतिः । ५–००
११ वाजसनेयिनाम् एकोदिष्टपद्धतिः । ५–००
१२ वाजसनेयिनां पार्वणपद्धतिः । ५–००
१३ छन्दोगानां पार्वणपद्धतिः । ५–००
१४ वाजसनेयिनां विवाहपद्धतिः । १५–००
१५ छन्दोगानां विवाहपद्धतिः । १५–००
१६ वाजसनेयिनाम् उपनयनपद्धतिः । १५–००
१७ छन्दोगानाम् उपनयनपद्धतिः । १५–००
१८ प्रतिहारषष्ठी ( विवस्वत् षष्ठी ) । १–५०
१९ आह्निकपञ्चदेवपूजापद्धतिः । १–५०
२० वर्षकृत्यम् । श्रीरुद्रधर-विरचितम् । सम्पूर्ण ११०–००
प्रथम भाग ५५–००, द्वितीय भाग ५५–००
२१ कूपोत्सर्गपद्धतिः १–००; २२ गृहोत्सर्गपद्धतिः १–००
२३ एकादशीव्रतोद्यापनपद्धतिः । ५–००
२४ आकाशदीप-तुलसी-कार्तिकोद्यापनत्रयपद्धतिः । १–५०
२५ दुर्गापूजाश्यामापूजापद्धतिः । १५–००
२६ पितृकर्म-निर्णयः । २५–००
२७ मैथिलीसाम्प्रदायिक-दुर्गासप्तशती । २०–००
२८ भाद्रशुक्लचतुर्थी-चन्द्रपूजा-चन्द्रव्रतकथा-सहिता ०–५०
२९ सिद्धिविनायक-चतुर्थी-व्रतकथा । ०–५०
३० हरितालिका-व्रतपूजाकथा । ०–५०
३१ वाजसनेयिनां श्राद्धपद्धतिः । २५–००
३२ छन्दोगानां श्राद्धपद्धतिः । २५–००
३३ तिथिनिर्णयः । २–००
३४ छन्दोगानां नामकरणम् । २–००
३५ गयाश्राद्धपद्धतिः । यन्त्रस्थ
३६ विश्वकर्मार्चापद्धतिः । १–००

Jain Education International For Private & Personal Use Only www.jainelibrary.org